# वास्तुसारसङ्ग्रहः

[ हिन्दीव्याख्यया समलङ्कृतः ]

कुलपते : प्रो. राजेन्द्रमिश्रस्य प्रस्तावनया विभूषितः

लेखकः सम्पादकश्च

आचार्यश्रीकमलाकान्तशुक्लः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

M.M. SUDHĀKARADVIVEDĪ-GRANTHAMĀLĀ
[ Vol. 6 ]

# VĀSTUSĀRASAṄGRAHA

***With the Hindi Commentary***

*FOREWORD BY*

**PROF. RAJENDRA MISHRA**

VICE-CHANCELLOR

*WRITTEN & EDITED BY*

**ĀCĀRYA ŚRĪ KAMALĀKĀNTA ŚUKLA**
**Sammānita-Ācārya**
Sampurnanand Sanskrit University
Varanasi
&
**Recipient : President's Certificate of Marit**




**VARANASI**
**2002**

*Research Publication Supervisor*— **ISBN : 81-7270-096-2**
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.



*Published by*—
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 280.00



*Printed by*—
**Mahatma Computer Printers**
Jagatganj, Varanasi.

म.म. सुधाकरद्विवेदि-ग्रन्थमाला
[ षष्ठं पुष्पम् ]

# वास्तुसारसङ्ग्रहः

[ हिन्दीव्याख्यया समलङ्कृतः ]

कुलपतेः प्रो. राजेन्द्रमिश्रस्य प्रस्तावनया विभूषितः

लेखकः सम्पादकश्च
**आचार्यश्रीकमलाकान्तशुक्लः**
सम्मानिताचार्यः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी
राष्ट्रपतिसम्मानितश्च




वाराणस्याम्
२०५९ तमे वैक्रमाब्दे १९२४ तमे शकाब्दे २००२ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः —*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

ISBN : 81-7270-096-2

❐

*प्रकाशकः—*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१००२

❐

*प्राप्ति-स्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२

❐

**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि

**मूल्यम्** – २८०.०० रूप्यकाणि

❐

*मुद्रकः—*
**महात्मा कम्प्यूटर प्रिण्टर्स**
जगतगंज, वाराणसी।

# स्वस्तिवाचिकम्

विविधशास्त्रप्रतिपादितं चूडान्तप्राविधिकसाहित्यं देववाण्या सयत्नं संरक्षितमित्यत्र न काऽपि संशीतिः। तत्र भौतिकशास्त्र-रसायनशास्त्र-खगोल-ज्यौतिष-सामुद्रिक-शालिहोत्र-गणितादीनि महीयन्ते। एषां समेषां शास्त्राणामविच्छिन्ना किञ्चोत्तरोत्तरं प्रवर्धमाना कापि महीयसी परम्पराऽधिसंस्कृतमवलोक्यते। तत्तच्छास्त्रेषु भारतीयमनीषिभिः कल्पिता ये सिद्धान्तास्ते व्यतीतेऽपि सुमहदनेहसि चिरन्तना एव परिलक्ष्यन्ते। न तेषु किमपि शैथिल्यं, सत्यार्थस्य नैयून्यं, परिवर्तनं वा सन्दृश्यते। यो हि गुरुत्वाकर्षणसिद्धान्तो न्यूटननाम्ना षोडशतमे खिस्ताब्दे इदम्प्रथमतया परां ख्यातिमुपजगाम, स एवाऽऽविष्कृत आसीद् भास्कराचार्यद्वितीयेन द्वादशतमे खिस्ताब्द एव। यथाऽऽह आचार्यः सिद्धान्तशिरोमणेर्गोलाध्याये—'**आकृष्टशक्तिश्च महीति**'।

एवमेव रविं परितः पृथिव्याः सञ्चरणमपि आचार्य आर्यभटः पञ्चम एव खिस्ताब्दे ख्यापितवान्। गैलीलियोमहोदयस्तावत् तदेव सत्यं सप्तदशे खिस्ताब्दे प्रतिपादितवान्। अनेनैतदुक्तं भवति यत् सर्वेष्वेव प्राविधिकज्ञानक्षेत्रेषु (Field of technical knowledge) भारतीया एवाग्रेसरीभूता न तावत्पाश्चात्त्याः। एतत्सर्वमिदानीं स्वतन्त्रराष्ट्रे पाठ्यग्रन्थमाध्यमेन प्रख्यापनीयं यथा भारतीया अज्ञानस्वापमग्ना विदितवेदितव्याः स्युः।

वास्तुशास्त्रस्यापि सैव स्थितिः। वेदमन्त्रेष्वेव वास्तुविद्याबीजान्युप्तानि परिलक्ष्यन्ते। तत्र त्वष्टाऽऽख्यो देवो विश्वकर्मा सृष्टेः प्रथमो वास्तुशिल्पी परिलक्ष्यते। वैदिकवाङ्मयेऽसौ तावतीं प्रख्यां न धत्ते यथा पौराणिके वाङ्मये। पुराणकथासु त्वष्टा विश्वरूपस्य पिता।

इन्द्रेण विश्वरूपे निहते सति क्रुद्धस्त्वष्टा तद्विनाशाय महाभैरवं वृत्रं जनयति। पुराणेषु त्वष्टृ-विश्वकर्मणोः प्रायेण समन्वितं रूपं दृश्यते। उभावेव मिथः पर्यायभूतौ। विश्वकर्मण एव पुत्री संज्ञा सूर्यस्य भार्याऽऽसीदित्यपि ज्ञायते।

अपरो वास्तुशिल्पी पुराण-रामायण-महाभारतादिषु भूयस्त्वेन वर्णितो मयासुरः। मयस्यैव पुत्री मन्दोदरी लङ्काधिपस्य रावणस्य भार्याऽऽसीत्। स एव मयः खाण्डववनदाहप्रसङ्गे महाभारतेऽपि समवलोक्यते। अर्जुनेन संरक्षितोऽसौ प्रह्वीभूतो युधिष्ठिरकृते विलक्षणामेव कामपि राजसभां निर्मितवान्, यत्र जलमपि स्थलायते स्म, स्थलञ्च जलमिव। रामायण-भारतयोरुभयोरपि विद्यमानो मयश्चिरजीवी परिलक्ष्यते। तन्नाम्ना लब्धकीर्तिर्वास्तुग्रन्थो **मयमत**मिति **मयमतसंहितेति** वा सम्प्रत्युपलभ्यते, यस्मिन् भारतीयवास्तुशिल्पस्याद्भुतं प्रतिपादनमुपलभ्यते। ग्रन्थोऽयमिदानीमेव इन्दिरागान्धीकलाकेन्द्रनाम्न्या दिल्लीस्थसंस्थया सम्यक्तया प्रकाशितः।

वास्तुविद्यायाः विस्तृतं साङ्गोपाङ्गञ्च प्रतिपादनं सर्वप्रथममवलोक्यतेऽग्निपुराणे (३८ तः ६१ तममध्यायं यावत्)। पुराणानन्तरमेव स्वतन्त्रवास्तुग्रन्थाः प्रणीताः। **मयमतं** तत्र महीयते। तदनन्तरमेव मालवाधीश्वरो भोजदेवः (१००१-५४ ई.) स्वोपज्ञं वास्तुविद्याग्रन्थं **समराङ्गणसूत्रधारं** प्रणीतवान्। तत्परम्परायामेव निरञ्जनमहापात्रप्रणीत**शिल्परत्नकोशा**दयो ग्रन्थाः परवर्तिनः परिलक्ष्यन्ते।

अग्निपुराणे देवगृह-प्रासाद-सभा-जयस्तम्भादीनां निर्माणस्य प्रतिष्ठायाश्च प्रशस्तो विधिर्वैज्ञानिकरीत्या समुपदिष्टः। सर्वेऽप्येते विषयास्तत्र **प्रासाद**शीर्षकेणैव व्याख्याताः। वस्तुतः प्रासाद एव द्विविधो भवति। देवप्रासाद इत्येकः। स एव मन्दिरमित्यपि। राजप्रासाद इत्यपरः। स एव सौधो राजमहालयो (राजमहल) वेत्युच्यते। देवालयनिर्मातॄणां सर्वाण्यपि पूर्वजन्माचरितपापानि विनश्यन्तीति घोषयत्यग्निपुराणम्।

मनसाऽपि यो मन्दिरं निर्मातुं सङ्कल्पते, सोऽपि किल्विषमुक्तो जायते—

**मनसा सद्मकर्तॄणां शतजन्माऽघनाशनम्।**
**येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहम्।।**

**विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम्।**
**नन्दन्ति पितरो दृष्ट्वा विष्णुलोके ह्यलङ्कृताः।।**

**फलं यन्नाप्यते यज्ञैर्धाम कृत्वा तदाप्यते।**
**देवागारे कृते सर्वतीर्थस्नानफलं लभेत्।।**

विलक्षणमेव देवालयरहस्यम्। देवालयो न भवति निष्प्राणं शिल्पमात्रम्। वस्तुतो देवालयः साक्षाद्धरिप्रतिम एव भवति। विष्णोरेव शिल्पाकृतिर्देवालयः। अत एव देवालयं साक्षात्परमेश्वरमेव मन्यमानास्तत्त्वार्थदर्शिनस्तत्र गच्छन्ति, न पुनर्मनोविनोदाय। निगदति पुराणकारः—

**प्रासादं वासुदेवस्य मूर्तिभूतं निबोध मे।**
**शुकनासाश्रिता नासा बाहू तद्रथकौ स्मृतौ।।**

**शिरस्त्वण्डं निगदितं कलशं मूर्धजं स्मृतम्।**
**कण्ठं कण्ठमिति ज्ञेयं स्कन्धं वेदी निगद्यते।।**

**पायूपस्थे प्रणाले तु त्वक्सुधा परिकीर्त्यते।**
**मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते।।**

**तच्छक्तिं पिण्डिकां विद्धि प्रकृतिञ्च तदाकृतिम्।**
**निश्चलत्वञ्च गर्भोऽस्याऽधिष्ठाता च केशवः।।**
**एवमेष हरिः साक्षात् प्रासादत्वेन संस्थितः।।**

—अग्निपुराणम्, अ.६१।

विलक्षणोऽयं शिल्पसिद्धान्तः। निखिलेऽपि भूमण्डले नेयं भारतीया वास्तुदृष्टिः क्वचिदन्यत्र दृश्यते। तस्मादेव भारतराष्ट्रे भवननिर्माणप्रसङ्गे सर्वमपि शास्त्रीयं संविधानकं सम्यक् परिपाल्यते। यतो हि वास्तुदेवताविरहितं वास्तुदोषदुष्टं वा भवनं न भवति योगक्षेमसाधकम्।

भोजदेवप्रणीतः **समराङ्गणसूत्रधारस्तु** ललितसाधारमिश्रकवर्गेषु विभक्तान् पञ्चषष्टिमितान् राजप्रासादान् समुपदिशति। तत्रापि रुचक-चित्रकूट-सिंहपञ्जर-भद्र-श्रीकूट-प्रमदाप्रिय-अवतंस-स्वस्तिकादयो राज-प्रासादाः सविशेषं महीयन्ते। एतेषां समेषां विशिष्टप्रासादानां भूरिविस्तरं चित्रणं समराङ्गणसूत्रधारे समुपलक्ष्यते, यदधीत्य भारतीयवास्तुशिल्पस्य वैलक्षण्यमनुभवितुं शक्यते।

प्रासादनिर्मातारः कीदृशाः स्युः? प्रासादोपकरणानि कानि? प्रासादनिर्माणस्य प्रशस्तोऽवसरः कः? मन्दिरे देवप्रतिमाप्राणप्रतिष्ठा-सम्पादका ब्राह्मणाः कुतस्त्याः स्युरिति सर्वमपि सूक्ष्मातिसूक्ष्मं रहस्यं भारतीयवास्तुविद्याकारैर्विशदीकृतम्। भास्करः कथयति—

**प्रासादो रेखपीठाख्यो द्विविधो भास्करमते।**
**विमानं पुरुषाकारं पीठाद् ध्वजस्थलावधि।।**

—शिल्परत्नकोषः।

प्रासादनिर्माणस्य वैशिष्ट्यजातं विवृणोति भोजदेवः स्वोपज्ञे **समराङ्गणसूत्रधारे**। तद्यथा—

**ये समाः समकर्णाश्च समस्तम्भाः समक्षणाः।**
**नैवोच्चा नातिह्रस्वाश्च कर्णायामादविह्वलाः।।**

**असम्मूढा विभागेन प्रमाणेन सुसंस्थिताः।**
**ऊर्ध्वाधः कर्णपालीभिरुपेताः सलिलान्तरैः।।**

**समभागविभक्तैश्च मुक्ताश्चालिन्दकैः समैः।**
**केवला जातिशुद्धाश्च प्रासादाः शुभदा नृणाम्।।**

—समराङ्गणसूत्रधारः, अ.५०।

मन्येऽलमेतावता! महीयते खलु भारतीया वास्तुविद्या। अस्या विद्यायाः प्रासङ्गिकतोपादेयता चाद्यापि प्रशस्तेः परां काष्ठामधिरूढे। निखिलेऽपि भूमण्डले सम्प्रति भारतीयं शिल्पशास्त्रं समाद्रियते।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सम्मानिताचार्यो विपश्चित्तल्लजानां धुरि कीर्तनीय **आचार्यश्रीकमलाकान्तशुक्ल**महाभागः समुपायनीकुरुते वास्तुसारसङ्ग्रहाख्यं ग्रन्थरत्नं स्वोपज्ञ**हिन्दीव्याख्यया** सम्भूषितम्। ग्रन्थोऽयं निखिलवास्तुवाङ्मयनिष्कर्षकल्पः सर्वजनसंवेद्यो लोकोपकारक्षमश्च। अस्य ग्रन्थस्योनविंशतिमितैरध्यायैर्विविधान् वास्तुविषयान् विशदीकरोत्याचार्यः। तत्र स्थानचयन-भूमिचयन-भूमिपरीक्षण-दिक्साधन-पिण्डसाधन-गृहारम्भमुहूर्त-वास्तुकुण्डली-शिलान्यास-शङ्कुस्थापन-रेखाकरण-द्वारकरण-काष्ठग्रहण-शालाविवेचन-गृहप्रवेशविवेचनादिविषया प्राक्तनवास्तुशास्त्रप्रामाण्यपुरस्सरं सश्रमं व्याख्याता आचार्यवर्यैः।

देवालयविषयेऽग्निपुराणकारः कथयति—**एवमेष हरिः साक्षात्।** तद्वदेवाऽहमपि कथयितुमुत्सहे—सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमिदं प्रकाशन-संस्थानं **डॉ. हरिश्चन्द्रमणित्रिपाठिमयम्।** तदनवरत-सारस्वताध्यवसायस्यैव फलमिदं यद् ग्रन्थरत्नानि भूयांसि पूर्वं प्रकाशितानि, सम्प्रति प्रकश्यन्ते, भाविनि काले प्रकाशयिष्यन्ते च। तदर्थं प्रकाशनप्राणभूतस्य तस्य शतायुष्यं कामये।

विश्वविद्यालयस्यास्य प्रशस्तायां प्रकाशनपरम्परायां ग्रन्थोऽयं गौरवास्पदं भविष्यतीति विश्वसिमि। एभिरेव शब्दैर्ग्रन्थकारस्य शतायुष्यं कामयमानोऽहं विलक्षणमिदं ग्रन्थरत्नं पाठकानां वास्तुविद्यारहस्यावगमोत्कण्ठितमानसानां करकमलेषु समर्पयामि।

**वाराणस्याम्**
मातृनवम्याम्,
२०५९ तमे वैक्रमाब्दे

विद्वद्वशंवदः
मिश्रोऽभिराजराजेन्द्रः
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# शुभाशंसा

इस समय पण्डित कमलाकान्त जी शुक्ल संस्कृत जगत् के वरिष्ठतम विद्वानों में उम्र में लगभग सबसे बड़े हैं । अभी भी स्वाध्याय, अध्यापन में पूर्ववत् लगे हुए हैं। त्रिस्कन्ध ज्योतिष के वे निष्णात पण्डित हैं और वास्तुशास्त्र के विरल विद्वान् हैं। वे जिन ग्रन्थों का सम्पादन, प्रणयन आदि करते हैं, उसकी व्याख्या भी प्रस्तुत करते हैं। वास्तुशास्त्र के ग्रन्थों की व्याख्या बहुत ही कठिन कार्य है।

इसके पूर्व श्री शुक्ल जी द्वारा 'संग्रहशिरोमणि:' (भाग-एक, दो), 'वास्तुसौख्यम्', 'लघुपाराशरीटीका', 'जैमिनिसूत्रम्' (यन्त्रालयस्थ) आदि ग्रन्थ सम्पादित, प्रणीत और संकलित किये गये हैं । काशी की परम्परा में 'जैमिनिसूत्रम्' के प्रारम्भ के दो ही अध्याय प्रकाश में रहे हैं; किन्तु श्री शुक्ल जी दक्षिण भारत की परम्परा के दो अध्याय और जोड़कर इस समग्र ग्रन्थ को चार अध्यायों में प्रकाशित करा रहे हैं ।

इस प्रकार उन्होंने सभी ग्रन्थों की व्याख्या लिखकर जगत् का बहुत उपकार किया है। अत: भगवान् भूतभावन विश्वनाथ से प्रार्थना है कि इसी तरह 'अजरामरवत्प्राज्ञो विद्यां चिन्तयेत्' के अनुसार संस्कृत-विद्या की साधना में लगे रहें, दूसरों को प्रेरित करते रहें।

श्रावणकृष्णैकादशी
वि. सं. २०५९
**काशी**

***विद्यानिवास मिश्र***
पूर्व-कुलपति
सम्पूर्णानन्द संस्कृत विश्वविद्यालय

# शिवसङ्कल्प

सृष्टि के कण-कण में परम तत्त्व व्याप्त है, यह भारतीय चिन्तन की मान्यता है। 'सर्वं खल्विदं ब्रह्म' इस सिद्धान्त का आधार लेकर निगम एवं आगम की उपासना प्रवर्तित है। उपासना की चरम परिणति में सर्वत्र एकत्व आभासित होता है, जो अद्वैतसिद्धि का स्वरूप है। भक्तशिरोमणि तुलसीदास जी ने भी "सियाराममय सब जग जानी । करहुँ प्रणाम जोरि जुग पानी" ॥ कहकर उक्त भाव को अभिव्यक्त किया है।

तत्त्ववेत्ता तप:पूत ऋषि-मुनि-महात्माओं ने विश्वकल्याण की भावना से भावित होकर अनेक शास्त्रों का आविर्भाव किया, जिनमें वास्तुशास्त्र अन्यतम है। वास्तुशास्त्र एक विज्ञानपूर्ण विद्या है, जिसका प्रभाव प्रत्यक्ष दृष्ट है। यह अत्यन्त हर्ष का विषय है कि ज्योतिषशास्त्र के प्रकाण्ड विद्वान् तथा वास्तुशास्त्र के मर्मज्ञ मनीषी राष्ट्रपति-सम्मानित आचार्य पं.कमलाकान्त शुक्ल जी ने "वास्तुसारसङ्ग्रह" नामक ग्रन्थ का प्रणयन किया है तथा राष्ट्रभाषा हिन्दी में अनुवाद कर साहित्य की श्रीवृद्धि की है। इस ग्रन्थ की विषय-वस्तु से भारतीय ऋषियों एवं आचार्यों की महनीय व्यापक दृष्टि एवं तत्त्वविचार की सूक्ष्मेक्षिका अवभासित है, जो अन्यत्र संस्कृतियों में दुर्लभ है।

मुझे पूर्ण विश्वास है कि इस महनीय ग्रन्थ के प्रकाशन से अनुसन्धाताओं, विद्वानों एवं जनसामान्य को समान रूप से लाभ होगा। आचार्य पं. शुक्ल जी इसी प्रकार वाङ्मयश्री की अभिवृद्धि करते रहें, यह भगवान् विश्वनाथ से प्रार्थना है।

राष्ट्रपतिपुरस्कृत **आचार्य पं. सीताराम कविराज**
(श्री दत्तात्रेयानन्दनाथ)
अध्यक्ष, श्रीविद्या-साधना-पीठ
शिवसदन, नगवा, वाराणसी।

॥ श्रीसाम्बशिवो विजयतेतराम् ॥

# प्राक्कथनम्

**पुरतो मारुतिर्यस्य वामे जनकनन्दिनी।**
**दक्षिणे लक्ष्मणो यस्य तं वन्दे रघुनन्दनम्॥**

अथ च तावत्क्रियमाणायाः कृतेः पूर्वं सम्बन्धाभिधेयप्रयोजनानि विवेचयितुं प्रयासः क्रियते, यतो विनैतद् जिज्ञासूनां प्रवृत्तिर्न भविष्यति, तदानीं कृतप्रयासोऽपि खपुष्पदर्शनमिवोपहास एव मात्रलाभोऽतः प्रतिपाद्यवास्तुसारसंग्रहस्य तावत्सम्बन्धः प्रस्तूयते–

स च सम्बन्धो वाच्यवाचकलक्षणवान् भवति, तद्यथा वाच्योऽर्थो वाचकश्च तदर्थनिःसूचकः शब्द इति। द्वितीयस्तु, उपायोपेयलक्षणवान्वेति सम्बन्धः। उपायस्त्वयं ग्रन्थ उपेयस्तु तद्ग्रन्थविषयकवास्तुविद्येयं यदा ब्रह्म विनिःसृतं ग्रन्थप्रतिपादितवास्तु-कलासम्बन्धिज्ञानं भगवतोऽनादेः शिवस्य त्रिनेत्रस्वरूपं सिद्धान्तहोरासंहितास्कन्ध-त्रयात्मकं ज्योतिःशास्त्रम्। यस्य संहिताभागान्तर्गतं कात्यायनचरणव्यूहोक्तविद्याऽ-थर्ववेदोपवेदप्रसूतस्थापत्योपनाम वास्तुविद्याविज्ञानं वेदाङ्गभूतमिति वा सम्बन्धः।

अभिधेयस्तु— देशकालानुसार-निगम-नगर-ग्राम-खेट-खर्वट-स्थान-भूशुद्धिप्रभृतिपरिस्कृतनिवाससम्बन्धिविवेचनजन्यशुभाशुभबोधः।

प्रयोजनन्तु— लोके प्राणिनामाजीवनं स्त्रीपुत्रादिकसौख्य-धर्मार्थकाममोक्ष-पुरुषार्थचतुष्टयसाधन-शीताम्बुतापशमन-देवनिकेतनपुण्यजलाशयारामादिलोको-भयसाधकं नाम। यथोक्तम्–

**सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धः कथनाद्यतः ।**
**तस्मात् सर्वेषु कार्येषु सम्बन्धः पूर्वमुच्यते ।।**
**किमेवात्राभिधेयः स्यादिति पृष्टस्तु केनचित् ।**
**यदि नो प्रोच्यते तस्मै फलं शून्यन्तु तद्भवेत् ।।**
**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।**
**यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ।।**

प्रयोजनन्तु–

**परगेहकृताः सर्वाः श्रौतस्मार्तादिकाः क्रियाः ।**
**निष्फलाः स्युर्यतस्तासां भूमीशः फलमश्नुते ।।**
**गृहस्थस्य क्रियाः सर्वा न सिद्ध्यन्ति गृहं विना ।**
**यतस्तस्माद् गृहारम्भ-प्रवेशसमयं ब्रुवे ।।**

इति भविष्यपुराणे उक्तम् । वास्तुशास्त्रे च—

**स्त्रीपुत्रादिकभोगसौख्यजननं धर्मार्थकामप्रदं**
**जन्तूनामयनं सुखास्पदमिदं शीताम्बुघर्मापहम् ।**
**वापीदेवगृहादिपुण्यमखिलं गेहात्समुत्पद्यते**
**गेहं पूर्वमुशन्ति तेन विबुधाः श्रीविश्वकर्मादयः ।।**

निवासोऽपि तार्णं, मृण्मयं, चैष्टिकं, दार्वं, शैलजञ्चेति पञ्चविधं तच्चोत्तरोत्तरं दशगुणोत्तरं फलं निर्माणे निवासे च जायत इति । यथा—

**कोटिघ्नं तृणजं पुण्यं मृण्मयं दशसंगुणम् ।**
**ऐष्टिकं शतकोटिघ्नं शैले त्वनन्तजं फलम् ।।**

**अत एव लोकोभयसाधकस्य निवासस्य सौविध्यं सर्वैरपेक्षितमिति तत्तु तदैव सम्भाव्यते यदा श्रुतिमूलकवास्तुशास्त्रविद्यास्थपतिभिर्यथाप्रमाणं निर्मितं भवेदिति । यतः—**

**श्रुतिरेव हि सर्वस्य साक्षिभूता विराजते ।**

किञ्च–

**पूर्वोक्तविधिरेवायमतो मन्त्रस्य निश्चितः ।**
**परिसंख्याफलेनोक्तो न विशेषः पृथक् श्रुतेः ।।**

अपि च–

**वेदोऽखिलो धर्ममूलं स्मृतिशास्त्रे च तद्विदाम् ।**
**आचारश्चैव साधूनामिति गौतमसूक्तितः ।।**

अथ च ग्रहनक्षत्रादीनां साक्षिभूतो भगवान् त्रिनेत्रः साम्बशिवः खेचरग्रहनक्षत्रमयीं दिव्यां विशालामाकण्ठचरणावलम्बिनीं स्वकीयत्रिनेत्रस्वरूपां स्कन्धत्रयात्मिकां सिद्धान्तहोरासंहितामणिग्रथितां मालां धारयन्नाविर्बभूव, प्रत्यक्षदर्शनेन किंकर्तव्यविमूढं ब्रह्माणं सर्जनायोपदिष्टवान् । स चोपदिष्टो ब्रह्मा यथोक्तं शास्त्रं सृष्ट्या सहैव प्रकटीकृतवान् मानवैर्ज्ञातुं योग्यम् । तथोक्तं भगवता सवित्रा—

**ग्रहर्क्षदेवदैत्यानां सृजतोऽस्य चराचरम् ।**
**कृताद्रिवेदाः दिव्यादाः शतघ्ना वेधसो गताः ।।**

अपि च–

**कुतोऽपरिमेयात्मा भूतानां परमेश्वरः ।**
**प्रसादं ब्रह्मणे कर्तुं प्रादुरासीत्ततो हरः ।।**

इति कूर्मपुराणवचनम् ।

श्रुतिमूलकत्वे च—

**वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण ।**
**शास्त्रादस्मात्कालबोधो यतः स्याद्वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात् ।।**
**वेदस्य निर्मलं चक्षुः ज्योतिःशास्त्रमकल्मषम् ।**
**सिद्धान्त–होरा–संहितारूप–स्कन्ध–त्रयात्मकम् ।।**

ऋग्वेदे चात्र द्रष्टा ऋषिः पिप्पलादः—

**गृहनैमि मनसा मोदमान ऊर्जं विनमद्वः सुमतिः सुमेधाः ।**
**अघोरेण चक्षुषा मित्रियेण गृहाणां पयश्वन्त्यः उत्तराणि ।।**
**इमे गृहामयो भुव ऊर्जस्वन्तः पयस्वन्तः ।**
**पूर्णानामस्य तिष्ठन्तस्तेनो जाननजायतः ।।**
**सुनृतावन्तः सुभगा इरावन्तो सामुदाः ।**
**अक्षुब्ध्यां अतृप्यासो गृह्रामस्मद्बीतः ।।**
**येषां मध्ये प्रवसन् येषु सौमनसो बहु ।**
**गृहानुपह्वयाम यान् नो ज[illegible]त्वायतः ।।**
**आहूता इह गाव उपहूता अजावयः ।**
**अथोऽन्नस्य कीलाल उपहूतो गृहेषु नः ।।**
**उपहूता भूरिधनाः सखायः स्वादुसन्मुदः ।**
**अरिष्टाः सर्वपुरुषा गृहा नः सन्तु सर्वदा ।।**
**आभी ऋग्भिरिदं जायते यद्गृहे ।**

गृहोऽयं मूर्तिमान् देवस्वरूप इति सर्वात्मना ज्ञायत इति ।

अस्यायं भावः— यस्य यत्र पवित्रता स्वच्छता अपेक्षिता, तस्य तत्र वासः सर्वकल्याणकारी भवतीति । अथ च प्रस्तुतवास्तुशास्त्रमुपर्युक्तज्योतिःशास्त्रस्य संहिताभागान्तर्गतं कात्यायनसूत्रविद्याऽथर्ववेदोपवेदस्थापत्यप्रतिपादितं यत्तदेवाधि-कृत्याधिकृतो देवशिल्पी विश्वकर्मा, यज्ञार्थं बीजान्तर्गतोर्वरकशक्तिविलुप्ता मही महाराजपृथुनामनृपतौ उर्वरकवतीं वासयोग्यां सम्पादयितुं कृतप्रयत्ने सति व्याकुलीभूता ब्रह्मणः शरणं गता, मीलिताक्षी पृथुजन्यां स्ववेदनां निवेदयन्ती आसीदिति पौराणिकी परम्परा । तदानीमेव महाराजपृथोः साहाय्यं कर्तुं निवासानुकूलां समधरातलाम् उर्वरकवतीं विधातुं श्रीब्रह्मणोपदिष्टो देवशिल्पी विश्वकर्मा पृथिव्या सहैव भूमौ समागत्य महाराजपृथोराज्ञया सर्वं यथेष्टं सम्पादितवानिति ।

ब्रह्मणोपदिष्टमहीपृथुसंवादस्य स्वल्पसङ्केतो दीयते, नाधिको विस्तरभयादिति ।
तद्यथा—

सदाचारविहीनैर्देवर्षियज्ञभाग्भुक्तभयादन्नौषधिबीजरक्षणार्थमेव ग्रसितबीजेति भुव उक्तिः पृथुं प्रति, यथा—

**पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशांपते ।**
**भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ।।**

तथा—

**अपालिताऽनादृता च भवद्भिर्लोकपालकैः ।**
**चोरीभूतेऽथ लोकेऽहं यज्ञार्थं ग्रसमोषधिम् ।।**
**नूनं ता वीरुधाः क्षीणामपि कालेन भूयसाम् ।**
**वत्सं कल्पय मे वीर येनाहं वत्सला तव ।।**
**धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम् ।**
**दोग्धारं च महाबाहो भूतानां भूतभावनः ।।**
**अथास्मिन् भगवन् वैन्यः प्रजानां वृत्तिदः पिता ।**
**निवासान् कल्पयाञ्चक्रे तत्र तत्र यथार्हतः ।।**
**ग्रामान् पुरः पत्तनानि दुर्गाणि विविधानि च ।**
**घोषान् व्रजान् सशिविरानाकरान् खेटखर्वटान् ।।**
**प्राक्पृथोरिह नैतेषां पुरग्रामादिकल्पना ।**
**यथा सुखं वसन्ति स्म तत्र तत्राकुतोभयाः ।।**

इति संक्षिप्तप्रसङ्गः श्रीमद्भागवते चतुर्थस्कन्धे इति, सर्वं यथाशास्त्रं सम्पादयितुं पृथोः साहाय्यं कर्तुं ब्रह्मणोपदिष्टस्य विश्वकर्मण उक्तिः । यथा—

**अहमप्यमुना विश्वनाथेनाम्बुजजन्मना ।**
**लोकानां सन्निवासार्थमादिष्टोऽस्मि स्वयम्भुवा ।।**

**रम्याणि नगरोद्यानि समस्थानान्यथो मया।**
**सुरासुरोरगादीनां निर्मितान्यात्मबुद्धितः।।**

ब्रह्मण उक्तिः—

**गत्वोर्विर्वैन्यनृपतेः प्रियं तव करिष्यति।**
**नगर–ग्राम–खेटादीन् करिष्यति च पृथक्-पृथक्।।**

विश्वकर्माऽपि स्वयं वदति—

**स्वयं करिष्येऽहमथो निवासाय पृथोः पुरीम्।**
**विचित्र–नगर–ग्राम–खेटामतिमनोहराम् ।।**

एवं यथोक्त्या राजनगरी-खेट-खर्वट-ग्राम-नगरादीनां सीमानिर्धारणपूर्वकं यथायोग्यं यथाकालं निर्माणं विधाय पश्चाद् भूदेवप्राणिनिवासनिर्माणाय चोत्तराधिकारिणोऽधिकृतास्तेन विश्वकर्मणा । यथा—

**भवन्तो पुनरागत्य चत्वारोऽपि चतुर्दिशम्।**
**तांस्तान् निवेशान् कुर्वन्तु पृथक्-पृथग् जनाश्रयान्।।**

युष्माभिः शैलेषु नदीषु च मार्गः, सेतुस्तथा तदन्तरे गृहो नृपाणां दुर्गाणि च सुखाप्तये भयनिवृत्तये च निर्मातव्यानीति प्रथमशिल्पिना निर्दिष्टा उत्तराधिकारिण इति । यथा—

**अन्तरेष्वध्वपाथोधिशैलानां सरितां तथा।**
**विधातव्यानि दुर्गाणि नृपाणां भयशान्तये।। (क)**

ते चत्वारः के, यैर्जगतः परिपालनायानेकविधानि प्रासादभवनानि निर्मीयन्ते तेषां परम्परा वंशावलिश्च यथाशास्त्रम्—

सृष्टिसर्जनसंरक्षणायाधिकृतो महाविष्णुनादिस्रष्टा यत्कृतं तदुच्यते वंशावलिसङ्केतेन




एवमुपर्युक्तशिल्पिनामादिशिल्पी कमलोद्भवो ब्रह्माऽस्य ब्रह्माण्डस्य रचनां कृतवानिति । स एवादिशिल्पी स्रष्टा भूयो भूयो ब्रह्माण्डं निर्माति स्म स्वायुषि-पर्यन्तम् । अयमेवादिविश्वस्रष्टा इति लोके शास्त्रे च व्यवह्रियते। ततस्तस्यादेशात् पूर्वं (क)पद्यप्रतिपादितकार्यसम्पादनाय पञ्चमपीठस्थिता उत्तराधिकारिणोऽधि-कृताः सन्ति । ते च स्थपतिः सूत्रग्राही तक्षको वार्धकिश्चेति स्वस्वकार्यं सम्पादयन्त इदानीन्तनमपि कालक्रमवशाद् योग्यताह्रासक्रमेण राजगृहस्थपतिः (राजमिस्त्री) काष्ठतक्षकः (बढ़ई) पाषाणतक्षकः (विन्द कुचवहिया) लौहतक्षको लौहकार इति लोके अद्यावधिपरम्परागतकार्यं सम्पादयन्तः समागता वर्तन्ते । एतेऽपि स्वकीयं भिन्नं भिन्नं निवासनिर्माण-पथनिर्माण-सेतुनिर्माण-याननिर्माण-प्रभृत्यनेकविध-धूम्रयान-स्नेहयान-वायुयान-लौहपथगामि-शकट-रथादिप्रभृति-वाहननिर्माणकार्यं करिष्यन्तो विराजन्ते ।

अपि चैतेषां योग्यतालक्षणञ्चेति क्रमशो यथा—

**परःशिवसकाशाद्धि ब्रह्मा चेन्द्रोऽपि लोककृत्।**
**स महाविश्वकर्मेति त्वीश्वरेणैव कीर्तितः।।**
**स एवायं विश्वकर्मा ब्रह्माण्डं सृजते मुहुः।**
**पूर्वोक्तवक्त्रचत्वारि वक्ष्येऽहन्तु पृथक्-पृथक्।।**

ब्रह्मणो मुखानि यथा—

**विश्वभूरिति नामैतत्पूर्ववक्त्रं प्रकीर्तितम्।**
**दक्षिणे विश्वविद्वक्त्रं विश्वस्थं च तथोत्तरे।।**
**पश्चिमे विश्वस्त्रष्टाख्यं वक्त्रमेवं चतुर्विधम्।**

एतेभ्यो मुखेभ्यो जायमानाः शिल्पिनो यथा—

**एतेभ्यः प्रथमं जातं विश्वकर्मचतुष्टयम्।**
**पूर्वानिने विश्वकर्मा जायते दक्षिणे मयः।।**
**उत्तरस्य मुखे त्वष्टा पश्चिमे तु मनुः स्मृतः।।**

इत्यनेन उपर्युक्तवंशावलिः सुस्पष्टा जायत इत्यलं प्रयासबाहुल्यमिति। पुनरेते शिल्पिनः स्वस्वकार्यं साधयितुं सृष्टिविस्तारदृष्ट्या क्रमेण ते इन्द्र-असुर-नल-वैश्रवणसुतामुपयामहे । ताभ्यश्च क्रमेण स्थपतिं सूत्रग्राहिणं तक्षकं वार्धकिमिति नाम्नः पुत्रानुत्पाद्य शिल्पिकार्ये ते नियुक्तास्तथा सहैवैतेषां योग्यताऽपि निर्दिष्टा। यथा—

**उपयामे विश्वकर्मा त्विन्द्रस्य तनयां तदा।**
**मयोऽसुरेन्द्रतनयाम् उपयेमे क्रमात्ततः।।**
**त्वष्टा वैश्रवणसुतामुपयेमे त्वनन्तरम्।**
**मनुर्नलस्य तनयाम् उपयेमे च तुर्यकः।।**

**विश्वकर्मणः पुत्रः स्यात् स्थपतिश्चैव स स्मृतः ।**
**मयस्य तनयः सूत्रग्राहीति परिकीर्तितः ।।**
**त्वष्टुर्देवर्ऋषेः पुत्रो वार्धकिरिति विश्रुतः ।**
**मनोः पुत्रस्तक्षकः स्यात्स्थपत्यादिचतुष्टयम् ।।**

एतेषां योग्यता—

**स्थपतिः सर्वशास्त्रज्ञो वेदविच्छास्त्रपारगः ।**
**स्थापयत्याधिपतिर्यस्मात् तस्मात् स्थपतिरुच्यते ।।**
**स्थपतेराज्ञया सर्वे सूत्रग्राह्यादयः सदा ।**
**कुर्वन्ति शास्त्रादेशेन वास्तुवस्तु प्रयत्नतः ।।**
**आचार्यलक्षणैर्युक्तः स्थपतिः स्यादिति विश्रुतः ।।**

एवम् उपर्युक्तपद्यानां भावः सुस्पष्टः ।

पुनरन्यदपि वैशिष्ट्यमेतेषाम्, तत्क्रमशः सूत्रग्राहिप्रभृतिलक्षणम्—

**श्रुतज्ञः सूत्रग्राही च रेखाज्ञः शास्त्रवित्तमः ।**

वार्धकिलक्षणम्—

**विचारज्ञः श्रुतिज्ञश्च चित्रकर्मज्ञवार्धकिः ।।**

तक्षकस्य लक्षणम्—

**तक्षकः कर्मवित्सभ्यः सबान्धवदयापरः ।**
**इहैव लोकस्य यत्कर्म सर्वं तच्छिल्पिनां गुरुः ।।**
**न लभ्यते तु यत्तस्मादेभ्यः सर्वं प्रसाधयेत् ।।**

उपर्युक्तचतुर्णां शिल्पिनामेकत्रोपलब्ध्यभावे सत्येकेनापि सर्वं निर्माणकार्यं साधयेद्धीमानिति । यतः सर्वेऽपि यथोक्तयोग्यताविभूषिताः, अत एव सर्वे पृथक् पृथगपि सर्वं निर्माणकार्यं पूरयितुं क्षमा भवन्ति । यतो विनैतत्कृते तु सकला मुक्तिर्भुक्तिश्च न सिद्ध्यति ।

अत एव एकेनापि शिल्पिना साधु सकलं निर्माणकार्यं देवप्रासाद-प्राणि-निवासादिकं प्रसाध्यते, येन मुक्तिं भुक्तिञ्च प्राप्नुवन्ति जनाः।

अथोपर्युक्तानां शिल्पिनां परस्परं कार्यसम्बन्धश्च निर्दिश्यते, यत्—

**स्थपतिस्तु स्वतुर्येभ्यस्त्रिभ्यो गुरुरिति विश्रुतः ।**
**सूत्रग्राही गुरुर्द्वाभ्यां तुर्येभ्योऽथ प्रकीर्तितः ।।**
**तक्षकस्य गुरुर्नाम्ना वार्धकिरिति विश्रुतः ।।**

अनेन निश्चीयते यत्स्थपतिः सर्वज्ञः शेषान् सर्वानादिशति ।

द्वितीयः सूत्रग्राही शेषद्वयस्य गुरुर्निर्देशकस्तथा तक्षकस्य आदेशको गुरुर्वार्धकिरिति ।

उपर्युक्तकार्यनिर्देशानन्तरं तक्षकस्य कृतेऽन्यदपि यत्कार्यं तदुपस्थाप्यते। यथा- वनात्काष्ठाहरणविधिना काष्ठं गृहीत्वा निर्वल्कलं त्वग्रहितं विधाय मासत्रय जले निक्षिप्य पश्चाज्जलान्निःसारयेत्, तेन तत्काष्ठनिखरत्वं सारवत्त्वं जीवनं दीर्घकालिकं काष्ठकीटच्छिन्नप्रभृतिदोषनिर्मुक्तं भवतीति । ततश्चतुरस्र-विदारणेन सर्वोपयोगि तत्काष्ठं भविष्यतीति तक्षककृते विशिष्टो नियमः ।

उक्तञ्च यथा—

**ततो भास्करमालोक्य वृक्षं कृत्वा प्रदक्षिणम्।**
**स्वस्तिवाचनकं कृत्वा च्छेत्ता कृत्योदगाननः ।।**

इदं काष्ठाहरणप्रकरणे द्रष्टव्यम् ।

एवमेव शिल्पिनां लक्षणं सम्यक् परीक्ष्य ग्रन्थोक्तदिशा भूम्यादिशुद्धिर्यथोत्तरं सर्वं कार्यं निर्देशानुसारं निवासो निर्मेय इति ।

## ग्रन्थस्य संक्षिप्तः परिचयः—

श्रुतिस्मृतिपुराणोक्तदिशा देवर्ष्याचार्यनिर्मितवास्तुविषयसमवेतग्रन्थान् यथा-मति सम्यगवलोक्य **"स्वल्पश्च कालो बहवश्च विघ्नाः"** इति मनसि सम्प्रधार्य

तत्सारतत्त्वं संगृहीतं स्वल्पायासगम्यमिति हेतो राष्ट्रभाषया समलङ्कृत्य सोदाहरणेन स्फुटीभूतं पुष्पपरागगृहीतमधुमाक्षिकमिव वास्तुसारसंग्रहनाम्ना प्रसिद्धेयं कृति-जिज्ञासूनामुपकाराय भगवतः साम्बशिवस्य कमलयुगले निवेदितेति भगवच्चरण-चञ्चरीकः ।

**निवासोपयोगिवस्तूनि—**

१. देश-प्रदेश-निगम-जनपद-नगर-ग्राम-खेट-खर्वट-प्रभृतीनां स्थाननाम-निर्वाचनम् ।

२. प्रकृत्याऽऽकृत्या रूप-रस-गन्ध-स्वाद-वर्ण-खनन-दहन-वपन-प्रश्न-शकुनादिपरिष्कृता वास्तुभूमिर्भाव्येति।

३. शीतोष्ण-समधातु-सानुकूलाऽनुरूप-जाङ्गल-मरु-स्वभावा यथानुकूला भूर्भवितव्या ।

४. समायत-समकोण-समचतुरस्र-दिक्शुद्धिसम्पन्ना यथोक्त-सहवास-परिष्कृता भूरिति भवितव्या ।

५. शिलान्यासादिषु शिलाशङ्कुलक्षणाश्रित-देवादिपूजनबलिनिःसारणादिकार्यं करणीयम् ।

६. विवाहवद् घटितं नाड्यैक्यं प्रवेशारम्भ-सन्मुहूर्तसमवेतं स्यादिति ।

७. यथोक्तं शास्त्रं मानचित्रदिग्भागानुकूलद्वारजलप्रवाह-जलादानदिक्शुद्ध-निम्नोन्नतप्रभृतिदोषरहितं भित्तिचयनादिभवनदोषपरिशुद्धं करणीयम् ।

८. इतः परं प्रकरणोक्तविषयविशिष्टदोषगुणादि सम्यगवलोकनीयम् ।

प्रकरणञ्च सोपाननाम्ना विभक्तमेकोनत्रिंशत्संख्याकं वर्तते,तानि च यथा—

| | | |
|---|---|---|
| १. प्रथम-सोपाने | - | अभिधेयाभिधेयादिकथनम् । |
| २. द्वितीये तु | - | देशग्रामादिचयनं निवासयोग्यमिति । |
| ३. तृतीये तु | - | स्थानचयनं यत्र निवासेन न काचिदापत्तिः समुपपद्यते । |
| ४. चतुर्थे तु | - | रस-वर्ण-स्वाद-गन्धादिना भू-योग्यायोग्यविचारः प्रस्तुतोऽस्ति । |
| ५. पञ्चमे तु | - | शकुनैर्लोकशास्त्रानुगैर्भू-शुभाशुभज्ञानं प्रदर्शितम् । |
| ६. षष्ठे तु | - | प्रश्नविद्या भू-शुद्धिविवेकः समुपस्थापितः । |
| ७. सप्तमे तु | - | अनेकविधदिक्शुद्धिविद्या प्रतिपादिता । |
| ८. अष्टमे तु | - | सदननिर्माणजन्मर्क्षं प्रतिपादितम् । |
| ९. नवमे तु | - | पिण्डक्षेत्रफलायादिनिर्माणयुक्त्युक्तं वर्तते । |
| १०. दशमे तु | - | गृहारम्भमुहूर्त्तं सफलं वरीवर्ति । |
| ११. एकादशे तु | - | वास्तुनिर्माणे समय-फलकथनात्मकं कुण्डलीलक्षण-मुदीरितम् । |
| १२. द्वादशे तु | - | शिलान्यासविधि–मुहूर्त-शिलालक्षणप्रभृति-बहुविधानि सन्ति । |
| १३. त्रयोदश-सोपाने | - | शङ्कुलक्षणं तदुपयोगिन्यासदिग्दिगादिबहुविस्तारतो वर्तते । |
| १४. चतुर्दश-सोपाने | - | वास्तुसीमानिर्धारणरेखाया लक्षणं फलञ्च समवेतम् । |
| १५. पञ्चदश-सोपाने | - | भित्तिचयनविधिगुणदोषप्रभृतिविवेचनं राजते । |
| १६. षोडश-सोपाने | - | द्वारकरणदोष-गुण-फलानि च सन्ति । |
| १७. सप्तदश-सोपाने | - | द्वारवेध-दोष-कपाटलक्षणतत्फलानि विधानानि च राजन्ते । |
| १८. अष्टादश-सोपाने | - | द्वारभंग-गृहदोषाद्यनेकवस्तु समवेतञ्चेति । |
| १९. एकोनविंशति-सोपाने | - | गृहोपयोगिग्राह्याग्राह्यकाष्ठविवेचनं तत्फलञ्च वरीवर्ति । |
| २०. विंशति-सोपाने | - | वास्तुपदनिर्धारणपूर्वकं तत्तद्दिग्देवतानिरूपणं वर्तते । |

| | | |
|---|---|---|
| २१. एकविंशति-सोपाने | - | हस्तलक्षणं तद्धारण-निर्माण-ज्येष्ठ-कनिष्ठ-लघु-प्रभृति-चमत्कारश्चमत्क्रियते । |
| २२. द्वाविंशति-सोपाने | - | शालाजिरालिन्दभेदादिबहुप्रकारा राजन्ते । |
| २३. त्रयोविंशति-सोपाने | - | निम्नोच्चाकृतिभेदलक्षणं फलञ्चास्ति । |
| २४. चतुर्विंशति-सोपाने | - | सिद्धपिण्डनिर्मितराजप्रभृतिबहूनां गृहाकृतिर्मानञ्चाभिहितम् । |
| २५. पञ्चविंशति-सोपाने | - | प्रवेशप्रकारानेकविधमुहूर्तदोषफलादिकञ्च वरीवर्ति । |
| २६. षड्विंशति-सोपाने | - | विधिविहितविरुद्धनिर्माणजन्यदोषसंग्रहश्चास्ति । |
| २७. सप्तविंशति-सोपाने | - | निर्मितगृहे जातापशकुननिर्देशनपूर्वकं तच्छान्तिश्च वर्तते । |
| २८. अष्टविंशति-सोपाने | - | यथासम्भवप्राप्तवास्तुसम्बन्धिविधानवर्णनं कृतमिति । |
| २९. एकोनत्रिंशत्सोपाने | - | भू-स्थितशल्य-द्रव्यज्ञानं तत्प्राप्तिविषयानेकतन्त्रमन्त्र-गणित-शकुन-लेपादिविधिविहितचमत्कृतिकरं वस्तु विराजते । |

इत्यादि–बहुविषयसमवेतं लोके सर्वोपयोगिभूतं लोकोभयोपकारकं प्रस्तुतेऽस्मिन् पूर्वमुक्तवचनविषयप्रमाणरूपाणि देवर्षि-महापुरुष-प्रभृत्युक्तानि यथा पूर्वमपि किमपि वैशिष्ट्यं प्रस्रवणानि पुनरुक्तान्यपि न दोषकराणि भवन्तीति प्रामाण्य-विशिष्टविषयप्रसवत्वादिति गुणग्राहिणो लोकोपकारिबुद्ध्या परदोषानुपेक्ष्यन्ते ।

ग्रन्थस्यास्य परिपूर्णतायै **डॉ.अजयकुमारशुक्ल**स्यावश्यकवस्तु परिपूरयितुं कृतभूरिपरिश्रमस्य,महात्मा-कम्प्यूटर-प्रिण्टर्स-सञ्चालकस्य **श्रीराजीवकुमारद्विवेदिनः**, **श्रीगोविन्दप्रसादत्रिपाठिनश्च** सर्वथा सर्वतोभावेनाभ्युदयहेतवे मुहुर्मुहुर्निवेदितो भगवान् भूतभावनः श्रीविश्वेश्वर इति ।

**वाराणस्याम्**
गुरुपूर्णिमायाम्,
विक्रम-संवत् २०५९

**कमलाकान्तशुक्लः**
सम्मानिताचार्यः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

## ।। ग्रन्थकर्तुः संक्षिप्तपरिचयः ।।

नारायण्यास्तरङ्गैः स्नपितकुलवधूवासवेश्मानवद्यं
वीचीवातैः सरय्वाः कवलितकलुषं श्रोत्रियक्षेत्रमेकम् ।
मीमांसा-न्यायशास्त्राध्ययन-पटुतरैर्भूसुरैर्भूषितक्ष्म
वेदध्यानैर्वटूनां मुखरितवलयं मण्डलं देवपुर्य्याः(देवरिया) ।।१।।
तस्मिन्नेवानवद्यः श्रुतसततरतैः पण्डितैर्मण्डलौका
गण्डक्याच्क्षालितक्ष्मः कृतमठमठियाशुक्लनामा चकास्ति।
ग्रामाद्दूरादुपेतैरधिकृतवसतिः शास्त्रचिन्ताभिलाषै-
र्यत्र स्थातात्द्विसन्ध्यं हिमगिरिशिखरं प्रेक्षते कौतुकेन ।।२।।
गर्गस्यर्षेस्तपोभिर्व्यपगतवृजिने मामखोराख्यधाम्नि
विप्रा आप्ताः समस्ता जपनियमपरा ब्रह्म साक्षादकुर्वन् ।
गौरीनाथोऽपि तेषां पशुपतिनगरीं तीर्थयात्राप्रसङ्गात्
आगत्यास्मिन्न्यवात्सीत्सवनसमुचिते गर्गवंशावतंसः ।।३।।
भार्यायां धर्मवत्यां शिवजनि सुषुवे सूनुरत्नं बुधोऽसौ
तेजस्वी च स्वभावात्प्रथितशुभकथोऽभून्नकच्छेदशुक्लः ।
लाक्षायां सोऽपि पत्न्यां चतुरुदधिसमानम्बिकादत्तमुख्यान्
सूनुं श्रीसर्वदेवं सुहृद्हृदयं सर्वराजं स्म सूते ।।४।।
तुर्यं सूनुं च धाम्ना कृतधवलकुलं शेखरं चन्द्रपूर्वो
वेदान्तन्यायविद्ये अगमदतितरां सर्वविद्यानवद्ये ।
मिश्रोपाह्वात्कुमारात्प्रथमशिवपदाच्चान्यशास्त्रं सचन्द्रः
सूनूँस्त्रीन् मङ्गलायामजनयदमलामेककन्यां च धन्याम् ।।५।।
दैवज्ञः प्रथमः सुतोऽथ कमलाकान्तोऽत्र संस्कारको
नीतिज्ञो हि जनार्दनः कुलमणिर्लोकप्रियश्चान्तिमः ।
विद्यावारिधिसत्सभापतिपदाद् विद्यानवद्याप्तये
काशीं संश्रितवान् प्रसादचरणो यः कालिकाख्योऽपरः।।६।।

विश्वदेव-शशिकान्ततनूजैः
सानिमेषशुभशुक्लक्रमाप्तैः ।
सान्नपूर्णशुभतृप्तिवधूभ्यां
विन्दुदुर्गमुनिदिव्यसुताभिः ।।७।।

सत्यसिद्धिमृदुलानिधिशीला
नामधन्यसंस्कृति-सुप्रभाभिः ।
रिद्धि-सिद्धि-शचिवैष्णविरूपा
वंशविभूषणशक्तिविभाभिः ।।८।।

कामधेनुरसपूर्णपुनीताः
पूर्तिकामगिरिजावसुधायाम् ।
लब्धज्ञान-लव-कमलाकान्तो
लोकपूज्य-ऋषिकेश-गुरुभ्यः ।।९।।

लोकदेवगिरि-भाष्यसुवेला
बालबुद्धिहितकाम-निबद्धः ।
देहबुद्धिजरया क्वचिदत्र
दोषनिधूनन-भाव-सुशीलाः ।।१०।।

कामयन्तु भवभीति-निवृत्त्यै
कृष्णजन्मशुभमासतिथौ हि ।
विक्रमीयगजबाणनखाद्बे
कीर्ति-समर्पित-कमलाकान्तः ।।११।।



# विषयानुक्रमणिका

○

॥ श्रीमङ्गलमूर्तये नमः ॥

# वास्तुसारसङ्ग्रहः

## अथ सम्बन्धाभिधेयप्रयोजनं नाम प्रथमं सोपानम्

**अनेकजन्मार्जितकर्मबन्धनं निर्धूय बुद्धिप्रदसर्वसाधकः।**
**उमासुतो देवगणाग्रगण्यो नमामि तं भक्तभयार्तिहारी॥**

पूर्वमत्र सम्बन्धाभिधेयप्रयोजनानि प्रतिपाद्यन्ते यतो हि नैतद्विना लोके प्रवृत्तिरेव भवतीति। अत एव तद्विषयिणी चर्चा चरीचर्यते।

वाच्यवाचकलक्षणवान् सम्बन्धो वाच्योऽर्थो वाचकश्च शब्दः। अथवोपायोपेयलक्षणवान् सम्बन्धः। उपायस्तु वास्तुविद्या, उपेयस्तु वास्तुविद्याविज्ञानं यत्सामवेदोपवेदस्थापत्यान्तर्भूतकात्यायनचरणव्यूहप्रतिपादितत्रिस्कन्धात्मकज्योतिःशास्त्राङ्गभूतसंहिताभागान्तर्गतं वास्तुविद्याविज्ञानं सम्बन्धः। अभिधेयो वास्तुविद्यातः प्राणिनिवाससम्बन्धि-देशकालस्थानादिशुभाशुभज्ञानमिति तथा प्राणिनां निवाससम्बन्धिशुभाशुभज्ञानं प्रयोजनमिति।

यथोक्तमत्र—

**सिद्धिश्रोतृप्रवृत्तीनां सम्बन्धः कथनाद्यतः।**
**तस्मात्सर्वेषु कार्येषु सम्बन्धः पूर्वमुच्यते॥**
**किमेवात्राभिधेयं स्यादिति पृष्टस्तु केनचित्।**
**यदि न प्रोच्यते तस्मै फलशून्यन्तु तद्भवेत्॥**
**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।**
**यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते॥**

प्रयोजनम्—

**सुखं धनानि ऋद्धिश्च सन्ततिः सर्वदा नृणाम्।**
**प्रियाण्येषान्तु संसिद्ध्यै सर्वं स्याच्छुभलक्षणम्॥१॥**

सुख, धनधान्य, ऐश्वर्य, सन्तति सहित निरन्तर सुख के लिये गृह का सुलक्षण होना आवश्यक है॥१॥

**देशः पुरं निवासश्च सभा वेश्माऽऽसनानि च।**
**यद् यत्तदीशमन्यत्वं तत्तच्छ्रेयस्करं मतम्॥२॥**

मनुष्य की सुख-सुविधा हेतु देश-पुर-ग्राम-निवास व आसन (शयन यान उपवेशन) ये सभी समानरूप में अपेक्षित हैं, अर्थात् सबकी अनुकूलता होने पर शुभ और प्रतिकूल लक्षणयुक्त होने पर अशान्ति का वातावरण बना रहता है॥२॥

**वास्तुशास्त्रादृते तस्य न स्याल्लक्षणनिश्चयः।**
**तस्माल्लोकस्य कृपया शास्त्रमेतदुदीरितम्।।३।।**

द्वितीय श्लोकोक्त विषयों के शुभाशुभफलप्रकाशक वास्तुशास्त्र से भिन्न कोई उपाय न होने से लोकानुकम्पया ब्रह्मा ने वास्तुविद्या का विधान बनाया है ।।३।।

लोकानुकम्पाहेतुः—

**अथैकदा जगज्जन्महेतुमम्बुरुहासनम्।**
**पृथ्वी पृथुभयाक्रान्ता चकिताक्षी समाययौ।।**
**प्रणम्य प्रणतिप्रह्वं निखिलं त्रिदशेश्वरम्।**
**सा गद्गदमुवाचेति भीता धात्री पितामहम्।।४।।**

सृष्टि के प्रारम्भ में आवासादि व्यवस्था हेतु जल-स्थल-वनोद्यान, ऊँच-नीच भूभाग को समतल करने के लिये तत्पर पृथु के भय से भीता भू गोरूपधारिणी निमीलिताक्षी निखिल देवों के साथ जाकर महाराज सृष्टिकर्ता पितामह से अपना दुःख निवेदन की ।।४।।

भूम्युक्तिः—

**भगवन्नहमेतेन पृथुना पृथुतेजसा।**
**उपद्रुता त्वां शरणं प्राप्ता त्रायस्व मां ततः।।५।।**

भगवन् मैं अत्यन्त विस्तृत यश (तेज) वाले महाराज पृथु से पीड़ित होकर आपके शरण में आई हूँ, मेरी रक्षा करें ।।५।।

पृथुं प्रति पितामहस्योक्तिः—

**इयं मही महीपाल! विधिवत्पालिता सती।**
**सस्यैरुपायनिष्पन्नैस्तव भोग्या भविष्यति।।६।।**
**यच्च स्यात्तेऽभिप्रेतं तु स्थानादिविनिवेशनम्।**
**तत्तदेष त्रिदशाचार्यः सर्वसिद्धिप्रवर्तकः।।७।।**

भू के निवेदन के बाद श्रीपितामह ने महाराज पृथु से कहा कि हे पृथु! पृथ्वी की अनुकूलता से ही तुम्हारे निवासादि निष्पत्ति-सम्बन्धि प्रयोजन, त्रिदशाचार्य श्रीविश्वकर्मा के सहयोग से सिद्ध होंगे। अतः तुम इसकी भलीभाँति रक्षा, पालन करो ।।६-७।।

स चायं विश्वकर्मा–

**सुतः प्रभासस्य विभोः स्वस्रीयश्च बृहस्पतेः ।**
**विश्वातिशायिधीः सर्वं विश्वकर्मा करिष्यति ।।८।।**

प्रभास वसु का पुत्र और बृहस्पति का भागिनेय यह विश्वकर्मा देव दनुज मानव प्रभृति प्राणियों के निवास सुखासन शयन आसनादि की पूरी व्यवस्था करेंगे ॥८॥

प्रसङ्गाद् विश्वकर्मणः पूर्णपरिचयः–

**तदेव त्रिदशाचार्यः सर्वसिद्धिप्रवर्तकः ।**
**सुतः प्रभासस्य वसोः स्वस्रीयश्च बृहस्पतेः ।।९।।**
**विश्वातिशायिधीः सर्वं विश्वकर्मा करिष्यति ।**
**राजन्नसौ महेन्द्रस्य विदध्यादमरावतीम् ।।१०।।**
**अन्या अप्यमुना रम्याः पुर्यो लोकभृतां कृताः ।**
**त्वया क्षेत्रीकृतां भूमिं दृष्ट्वा साद्रिद्रुमामसौ ।।११।।**
**सन्निवेशान् पुरग्रामनगराणां विधास्यति ।**
**तद्गच्छ वत्स लोकानामितस्त्वं हितकाम्यया ।।१२।।**
**भयोज्झिता त्वमप्युर्वि ! पृथोः प्रियकरी भव ।**
**काले स्मृतः स्मृतः पुण्यो राज्ञः प्रियचिकीर्षया ।।**
**त्वमप्यखिलमेवैतद् विश्वकर्मन् करिष्यसि ।।१३।।**

इति सर्वं यथाप्रसङ्गं सूक्तमेव ।

गृहप्रयोजनं च भविष्यपुराणे–

**गृहस्थस्य क्रियाः सर्वा न सिद्ध्यन्ति गृहं विना ।**
**यतस्तस्माद् गृहारम्भ-प्रवेश-समयं ब्रुवे ।।१४।।**

वास्तुराजवल्लभे च–

**स्त्रीपुत्रादिकभोगसौख्यजननं धर्मार्थकामप्रदं**
**जन्तूनामयनं सुखास्पदमिदं शीताम्बुघर्मापहम् ।**
**वापीदेवगृहाणि पुण्यमखिलं गेहात्समुत्पद्यते**
**गेहं पूर्वमुशन्ति तेन विबुधाः श्रीविश्वकर्मादयः ।।१५।।**

निवासे कोटिफलम्–

**कोटिघ्नं तृणजे पुण्यं मृण्मये दश संगुणम् ।**
**इष्टिके शतकोटिघ्नं शैलेऽनन्तं फलं गृहे ।।१६।।**

निर्माण में तृण गृह से कोटि फल, मृण्मय मृत्तिका निर्मित गृह से दश कोटि फल, ईंट गृह में शतकोटि फल इष्टि गृह व पाषाण निर्मित गृह में अनन्त कोटि फल होता है ॥१६॥

जीर्णोद्धारफलम्–

**वापीकूपतडागानि प्रासादभवनानि च।**
**जीर्णानुद्धरते यस्तु पुण्यमष्टगुणं लभेत्।।१७।।**

वावली, कूँआ, सरोवर, तालाब, प्रासाद व भवनों के जीर्णोद्धार में नूतन निर्माण फल से अष्टगुणित अधिक फल प्राप्त होता है ॥१७॥

गृहादिनिर्माणप्रकारः–

**व्यक्ताऽव्यक्तं गृहं कुर्याद् भिन्नाभिन्नन्तु भूमिकम्।**
**यथा स्वामिशरीरं स्यात् प्रासादमपि तादृशम्।।१८।।**
**तद्रूपं तत्प्रमाणं स्यात् पूर्वसूत्रं न चालयेत्।**
**हीने तु जायते हानिरधिके स्वजनक्षतिः।।१९।।**

प्राणी के शरीर मर्यादा के ही अनुसार गृहादिकों का यथाशास्त्र निर्माण करना श्रेयस्कर होता है, अन्यथा न्यूनाधिक निर्माण से हानि होती है। यथापूर्व प्रथम निरूपित प्रारम्भ में जो सूत्रित स्थान हैं, उनके साथ ही वृद्धि व ह्रास करना चाहिए ॥१८-१९॥

## गृहसूक्तम् (अथर्ववेदे पैप्पलादशाखा)

द्रष्टा ऋषिः पिप्पलादः–

**गृनैमि मनसा मोदमान ऊर्जं विनमद्धः सुमितः सुमेधः।**
**अघोरेण चक्षुषा मित्रियेण गृहाणां पश्यन्त्यः उत्तराणि।।२१।।**

ऊर्जा शक्ति को पुष्ट करता हुआ मतिमान् व मेधावी मैं, मुदित (प्रसन्न) मन से घर में आता हूँ। कल्याणकारी तथा मैत्री भाव से समन्वित नेत्र से इन घरों को देखता हुआ इन घरों में जो रस है, उसे मैं ग्रहण करता हूँ (उपयोग करता हूँ) ॥२०॥

**इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः।**
**पूर्णा नामस्य तिष्ठन्तस्ते नो जानन्तु जानतः।।२१।।**

मेधा व सुख देने वाले ये घर धनधान्य-घी-दूध प्रभृति सुख सामग्रियों व सौभाग्य सौन्दर्य से परिपूर्ण हो मेरे साथ घनिष्ठ मैत्री रखें व हम इन्हें अच्छे ढंग से समझें ॥२१॥

**सूनृतावन्तः सुभगा इरावन्तो हसामुदाः ।**
**अक्षुब्ध्या अतृष्यासो गृहामस्मद्बीतनः ।।२२।।**

जिन घरों में रहने वाले परस्पर सुमधुर भाषण (वार्तालाप) करते हैं, जिनमें प्रत्येक सुखदायी सौभाग्य निवास करता है, जो प्रीतिभोजों से ओतप्रोत (संयुक्त), सभी प्राणी हँसी-खुशी से (प्रसन्नचित्त) रहते हैं। इनमें कोई भूखा-प्यासा न रहे, किसी प्रकार के भय को स्थान न मिले ॥२२॥

**येषां मध्ये प्रवसन् येषु सौमनसो बहु।**
**गृहानुपह्वयाम यान् ते नो जानन्त्वायतः ।।२३।।**

प्रवास में रहते हुए भी जिनका हमें ध्यान आया करता है (स्मरण रहता है), ये बाहर से आये हुए हमें पूर्णरूप से अपना समझें ॥२३॥

**उपहूता इह गाव उपहूता अजावयः ।**
**अथोऽन्नस्य कीलाल उपहूतो गृहे पुनः ।।२४।।**

हमारे इन घरों में दुधारू गाय एवं अन्य पशु भी प्रचुर संख्या में रहते हैं, अन्न को अमृततुल्य स्वादिष्ट बनाने वाले रस भी हैं ॥२४॥

**उपहूता भूरिधनाः सखायः स्वादु सन्मुदः ।**
**अरिष्टाः सर्वपुरुषा गृहा नः सन्तु सर्वदा ।।२५।।**

बहुत धन वाले मित्र इन घरों में आते हैं, प्रसन्नतापूर्वक साथ में स्वादिष्ट भोजन में सम्मिलित होते हैं। हे हमारे घरों, तुममें निवास करने वाले सभी प्राणी रोग-व्याधि-चिन्ता से मुक्त रहें व अक्षीण अर्थात् किसी प्रकार के ह्रास की अनुभूति न करें। उपर्युक्त व्यवस्था वैदिक परम्परा से हमारे निवास के लिए चली आ रही है। इसके अनुसार हमें गृह को प्राणवान् समझते हुए सर्वदा उसकी स्वच्छता, पवित्रता सर्वाङ्गपूर्ण रखने की व्यवस्था के लिए सावधान, जागरूक रहना चाहिए ॥२५॥

**।। इति प्रयोजनसम्बन्धाभिधेयं नाम प्रथमं सोपानम् ।।**



## अथ ग्रामादिवासो नाम द्वितीयं सोपानम्

**देशग्रामानुकूलत्वं दिशो भूतग्रहस्य च।**
**मासधिष्ण्यादिकं शुद्धं वीक्ष्यायव्ययसंज्ञकम्।।१।।**

निवास के लिये देश-ग्राम-स्थान के चयन में जलवायु, पंचभूततत्त्व, ग्रह, मास, नक्षत्र, आय, व्यय, काकिणी प्रभृति परिशुद्ध होना चाहिये ।।१।।

**गुरुशुक्राऽर्कचन्द्रेषु स्वोच्चादिबलशालिषु।**
**गुर्वर्केन्दुबलं लब्ध्वा गृहारम्भं प्रशस्यते।।२।।**

गुरु-शुक्र-सूर्य-चन्द्र अपने-अपने स्वोच्चादि बलाधिकार से सम्पन्न हों व कर्ता के नाम राशि से बली स्थान में हों तो गृह का आरम्भ प्रशस्त होता है, यह सामान्य नियम है। विशेष के लिए यथाप्रकरण देखा जाय ।।२।।

**विवाहोक्तमहान् दोषानृते यामित्रशुद्धितः।**

विवाहोक्त महादोषरहित यामित्र सप्तम स्थान शुद्ध मुहूर्त होना चाहिये।

**रिक्ताकुजार्कवारौ च चरलग्नं चरांशकम्।।३।।**

रिक्तातिथि, सूर्य-भौमवार, चर लग्न व चर नवांश गृहारम्भ में निषिद्ध हैं ।।३।।

**त्यक्त्वा कुजार्कयोरंशं पृष्ठे चाग्रे स्थितं विधुम्।**
**बुधोऽपराशिगं सूर्यं कुयद्गिहं शुभाप्तये।।४।।**

कुज, रवि का अंश, द्वार सम्मुख व पृष्ठ चन्द्र[१], विहित-विरुद्ध राशिगत सूर्य को छोड़ गृहारम्भ शुभाप्ति के लिये होता है ।।४।।

**द्वारशुद्धिं निरीक्ष्यादौ भूशुद्धिं वृषचक्रकम्।**
**निष्पञ्चके स्थिरे लग्ने द्व्यंगे चालयमारभेत्।।**
**एवं सर्वं विशुद्धं स्यात्सततं गृहसौख्यदम्।।५।।**

सर्वप्रथम द्वार (मुख्य) की दिशा निश्चित करके भूशुद्धि, वृष चक्र शुद्धि, निष्पञ्चक, स्थिर व द्विस्वभाव लग्न में गृहारम्भ होता है। यह उपरोक्त सभी बातें सामान्य सभी गृहारम्भों में देखनी चाहिए ।।५।।

अथ देशादिचयने रामः–

**यद्भद्व्यङ्कसुतेशदिङ्मितमसौ ग्रामः शुभो नामभात्।**
**काकिण्यामुभयोऽथ तद्विवरतो यस्याधिकः सोऽर्थदः।।**

---

१. दिग्द्वार नक्षत्रों का विषय है।

**स्ववर्गं द्विगुणं विधाय गजैः शेषित इति ।।६।।**

नाम की राशि से ग्राम की राशि २/५/९/१०/११ इन स्थानो में होने पर ग्राम शुभकारक होता है और ग्राम वर्ग को द्विगुणित अपनी वर्ग संख्या में जोड़कर आठ भाग से शेष ग्राम की काकिणी व इसी प्रकार स्ववर्ग द्विगुणित में ग्राम वर्ग जोड़कर ८ भाग शेष में कर्ता की काकिणी होती है। इसमें जिसकी काकिणी अधिक हो, वही ऋणी होता है ॥६॥

उदाहरण–

शिव कर्ता ग्राम-काशी

शिव वर्ग संख्या = ८ ग्राम वर्ग संख्या = २

२×८+२=१८।१८÷८= शेष = २ । कर्ता के काकिणी की संख्या = २। एवं = २×२+८=१२ । १२ ÷ ८ = शेष = ४ ग्राम-काकिणी है। दोनों में ग्राम-काकिणी अधिक होने से शिव के लिये काशीवास लाभदायक है।

अन्यदपि रामः–

**सेव्याधमर्णयुवतीनगरादिभं चेत्पूर्वं हि भृत्यधनिभर्तृपुरादिसद्भात् ।**
**सेवाविनाशधननाशनभर्तृनाश-ग्रामादिसौख्यहृदिदं क्रमशः प्रदिष्टम् ।।७।।**

सेवक अधमर्ण (ऋण गृहीता) युवती व नगर का नक्षत्र क्रमशः स्वामी, धनी (ऋणदाता) भर्ता (पति) व पुर में निवास करने वाले के नक्षत्र से पूर्व प्रथम हो, तो क्रम से सेवा, धन, पति व ग्रामवासी की हानि होती है ॥७॥

रामश्च–

**गृहे शतत्स्त्रीसुखवित्तनाशोऽर्केन्द्वीज्यशुक्रे विवलेऽस्तनीचे ।**
**कर्तुः स्थितिर्नो विधुवास्तुनोर्भे पुरःस्थिते पृष्ठगते खनिः स्यात् ।।८।।**

यदि गृहपिण्ड व गृहारम्भ का नक्षत्र गृह के मुख्य द्वार के सम्मुख हो तो गृहस्वामी का उद्वास उच्चाटन व मुख्य द्वार के पीछे हो तो चोरी होती है ॥८॥

देशग्रामादिनिवासचक्रं वास्तुरत्नावल्याम्–

**मस्तके पञ्च लाभाय मुखे त्रीणि धनक्षयः ।**
**कुक्षौ पञ्च धनं धान्यं षट्पादे स्त्रीदरिद्रता ।।९।।**
**पृष्ठे चैके पादहानिर्नाभौ चत्वारि सम्पदः ।**
**गुह्ये चैकं भयं पीडा हस्ते चैकन्तु क्रन्दनम् ।।१०।।**
**वामे चैककरे भेदो ग्रामचक्रं नराकृतिः ।**
**गणयेन्नामनक्षत्रं ग्रामनक्षत्रतः सदा ।।११।।**

अत्र ग्रामनक्षत्रमुपलक्षणं देश-पुर-पत्तनादिष्वपि चक्रं विचारणीयम् ॥
अत्रैव ग्रन्थान्तरम् –

**ग्रामो यत्र भवेदृक्षे तदाद्याः सप्त मस्तके।**
**पृष्ठे सप्त हृदि सप्त पादे सप्त च तारका ।।१२।।**

ग्राम नक्षत्र से नाम नक्षत्र की संख्या का क्रमशः फल चक्र से देखें, स्पष्टार्थ हो जायेगा ॥९-१२॥

**प्रथम चक्र–** ग्राम नक्षत्र से नाम नक्षत्र के अनुसार

| स्थान | मस्तक | मुख | कुक्षि | पाद | पृष्ठ | नाभि | गुह्य | हस्त | वामकर | |
|---|---|---|---|---|---|---|---|---|---|---|
| नक्षत्र संख्या | ५ | ३ | ५ | ६ | १ | ४ | १ | १ | १ | सप्तविंशति- |
| फल | लाभ | धनक्षय | धनप्राप्ति | दरिद्रता | हानि | सम्पद् | भयपीड़ा | क्रन्दन | भेद | नक्षत्राणि |

द्वितीयचक्रफलम्–

**मस्तके च धनी मानी पृष्ठे हानिश्च निर्धनम्।**
**हृदये सुखसम्पत्तिः पादे पर्यटनं सदा ।।१३।।**

स्पष्टार्थ द्वितीय चक्र देखें ॥१३॥

**द्वितीय चक्र पूर्ववत्**

| स्थान | मस्तक | पृष्ठ | हृदय | पाद | |
|---|---|---|---|---|---|
| नक्षत्र संख्या | ७ | ७ | ७ | ७ | अष्टविंशतिनक्षत्र विहित हैं । |
| फल | धनमान | हानि निर्धनता | सुख सम्पत्ति | भ्रमण | |

अत्रैव वासार्थं शिवावलिः –
संग्रहशिरोमणौ–

*रात्रौ भक्तमांसादिखाद्यवस्तु एकस्मिन् पात्रे कृत्वा तत्रैव जलपात्रं च रहसि भूमौ निधाय ततो दूरं स्थितः शिवाशब्दं प्रतीक्षेत निवासाय ।*

फलम्–

**नैर्ऋत्ये हि शिवा रौति तदा वासं न कारयेत्।**
**ईशाने मरणं प्रोक्तं चोत्तरे कुरु सर्वतः ।।**
**वासं वायव्यकोणे च भयं किञ्चित्प्रजायते ।।१४।।**

स्पष्टार्थ एव।

राशिवशादपि ग्रामवासफलं रामः–

**गो–सिंह–नक्रमिथुनं निवसेन्न मध्ये**
**ग्रामस्य पूर्वककुभेऽलिझखाङ्गनाश्च ।।**

**कर्को धनुस्तुलेभमेषघटाश्च तद्वद्**
**वर्गाः स्युः पञ्चमपरा बलिनः स्वदिक्के ।।१५।।**

*एते अ क च ट त प य श वर्गाः पूर्वादि दिक्षु स्वामिनो भवन्ति ।*

वृष-मिथुन-सिंह व मकर राशि वाले को ग्राम-पुरादि के मध्य में स्वनिवास नहीं बनाना चाहिए। पूर्वादि दिशाओं में क्रमशः वृश्चिक-मीन-कन्या-कर्क-धनु-तुला-मेष व कुम्भ राशिवालों को अपना निवास नहीं बनाना चाहिये और अ-क-च-ट-त-प-य-श ये आठ अवर्गादि पूर्वादिक्रम से आठ दिशाओं के स्वामी होते हैं, जिसमें अपने से पाँचवाँ शत्रु होता है। शत्रु की दिशा का वास उत्तम नहीं होता है ।।१४-१५।।

अत्रैव चतुर्थो मित्रं परे समाः पञ्चमो रिपुरिति ध्येयम् ।

वासे भकूटफलं ज्यौतिःसारे–

**एकभे सप्तमे ग्रामे वैरं हानिस्त्रिषष्ठके ।**
**तुर्याष्टद्वादशे रोगः शेषस्थाने शुभं भवेत् ।।१६।।**

स्वनाम राशि से ग्राम राशि १/३/६/७/८/४/१२ इन अंकों में हो, तो हानि-वैर व रोग का भय होता है ।।१६।।

अत्रैवान्यदपि–

**स्वनामराशेर्यद्राशिर्द्विशराङ्केशदिङ्मितः ।**
**स ग्रामः शुभदः प्रोक्तस्त्वशुभदः स्यादितोऽन्यथा ।।१७।।**

शुभांक २। ५। ९। १०। ११ स्पष्टार्थः ।।१७।।

वासार्थं ग्रहदशाऽपि जानीयाद् यथोक्तं वास्तुप्रदीपे–

**नृग्रामदिग्वर्गमिताङ्कयोगे सूर्यादिशेशा नवभिश्च शेषात् ।**
**सूर्येन्दुभौमास्त्वगुजीवमन्दसौम्याश्च केतुर्भृगुजः क्रमेण ।।१८।।**

ग्राम नाम व बसने की दिशा के वर्गों के योग में ९ भाग शेष क्रम से सूर्य-चन्द्र-भौम-राहु-गुरु-शनि-बुध-केतु व शुक्र दशेश होंगे ।।१८।।

**विशेष–** युक्ति के अनुसार उपर्युक्त तीनों के वर्ग क्रम से ही संख्या ग्रहण करनी चाहिये, जैसा कि दिन की रवि, तिथि की प्रतिपदा, राशि की मेष व नक्षत्र की अश्विनी से संख्या ग्रहण की जाती है। यह युक्तियुक्त परम्परा प्रसिद्ध है, वर्ग के स्वर की संख्या को ग्रहण करना युक्तिहीन है, अतः अवर्गादि क्रम से संख्या—

अ=१। क=२। च=३। ट=४। त=५। प=६। य=७। श=८।
यही संख्या दशा एवं काकिणी में लेनी चाहिये।

एतेषां दशावर्षप्रमाणं तत्रैव–

**षड्दिगद्रिधृत्यवनीश्वराङ्कचन्द्राद्र्येकाः सप्तनखाश्च तेषाम्।**
**क्षुणं गतर्क्षं निजवर्षसंख्याभक्तं भभोगेन गताः समादिकाः।।१९।।**

गृहारम्भकालिक गतर्क्ष घटी को दशेश के दशावर्ष से गुणाकर भभोग से भाग देने से दशावर्ष भुक्त वर्षादि होगा, यह क्रिया प्रसिद्ध है। दशा-वर्षमान क्रमशः = ६।१०।७।१८।१६।१९।१७।७ व २० है ॥१९॥

अत्रैवोक्तम्–

**विंशोत्तरी दशा चात्र गणनीया विशेषतः।।**

स्पष्टार्थः।

वासस्थानदशाज्ञानाय स्थाननिर्देशो वास्तुसारे–

**स्वगेहपण्यारामात् तडागाद्वलदुर्गतः।**
**दशा ग्रामे तथा कूपे गणनीया विचक्षणैः।।**
**स्वगृहे च प्राणिनां यदग्रवर्ती स्थिरसंयुतः।।२०।।**

पूर्व स्थित स्वगेह– पण्यस्थान (व्यापार स्थान) आराम (बाग) तड़ाग कूप ग्राम इनमें जो स्थिर व समीप हो, उससे किसी नूतन स्थान की दशा का आनयन करना चाहिए। गृह-कूप-बाग-तड़ाग प्रभृति किसी के निर्माण में भी एक-दूसरे को स्थिर मानकर दशा का आनयन करना चाहिए ॥२०॥

मुहूर्तगणपतौ च वासफलम्–

**रोगोऽष्टमे व्यये तुर्ये ८।१२।४ वैरमाद्ये च सप्तमे १।७।**
**हानिः षष्ठे ६ तृतीये ३ च ग्रामराशौ स्वनामभात्।।२१।।**

नाम की राशि से ग्राम की राशि ४/८/१२ हो तो रोग, १/७ में वैर, ३/६ में हानि होती है ॥२१॥

पूर्वोक्तदशाफलं ग्रन्थान्तरात्–

**सूर्यो वित्तविनाशनं प्रकुरुते चन्द्रः सुखं सम्पदां**
**भौमो राजभयं वितनुते लक्ष्मीः सुखं बोधनः।**
**धर्माणां खलु वृद्धिदः सुरगुरुः शुक्रः सुखं सौम्यदः**
**दुःखं नैश्व्यमितीरितं रविसुतो राहुः सुतार्तिप्रदः।।२२।।**

सूर्य की दशा के स्थान में कोई निर्माण किया जाय या आरम्भ समय सूर्य की दशा हो तो धन का नाश, चन्द्र में सुख सम्पत्ति की प्राप्ति, मंगल में राजभय, बुध में लक्ष्मी व सुख की उपलब्धि, गुरु में धर्मादि कार्यों की पूर्ति, शुक्र में सुख व शुभ कार्य की सिद्धि, शनि में दुःख दरिद्रता की वृद्धि राहु व केतु की दशा में सन्तति पीडा होती है ॥२२॥

वास्तुरत्नावल्यां काकिणीविचारः–

**स्ववर्गं द्विगुणीकृत्य परवर्गेण योजयेत्।**
**अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत्।।२३।।**

स्पष्टार्थ, पूर्व प्रदर्शित है ॥२३॥

मुहूर्तगणपतौ च–

**स्ववर्गं द्विगुणं कृत्वा परवर्गान्वितं गजैः।**
**भजेच्छेषास्तु काकिण्यः कार्याश्चैव परस्परम्।।२४।।**
**अधिका यस्य काकिण्यो भवेदन्यस्य सोऽर्थदः।**
**इत्थं काकिण्याधिक्ये निवसेन्नगरे नृपः।।२५।।**

पूर्ववत् स्पष्टार्थः।

अत्रैव वासेऽपि–

**मध्ये ग्रामस्य गोद्वन्द्वनक्रसिंहाख्यराशयः।**
**मीनालिकन्यका पूर्वे दक्षिणे कर्कराशिकः।।२६।।**
**धन्विनः पश्चिमे मेषतुलाकुम्भास्तथोत्तरे।**
**नो वसेयुर्नराः सौख्य–धनलाभात्मजार्थिभिः।।२७।।**

वृष-मिथुन-सिंह-मकर व सिंह ग्राम के मध्य, मीन-वृश्चिक-कन्या पूर्व, कर्क-धनु दक्षिण में, पश्चिम में मेष-तुला राशिवाले, कुम्भ राशिवाले उत्तर में सुख धन-पुत्र व अर्थ की इच्छा से निवास न करें ॥२६-२७॥

पुनस्तत्रैवाष्टवर्गाः–

**वैनतेयमुखा वर्गा बलिष्ठाः पूर्वतः क्रमात्।**
**स्वस्वदिक्स्थं गृहं श्रेष्ठं पञ्चम्यां दिशि मृत्युदम्।।२८।।**
**ग्रामे चतुर्षु कोणेषु वसेयुर्हीनजातयः।**
**विप्राद्यास्तु दिशास्वेव मध्ये वापि सुखेप्सवः।।२९।।**

नारायणश्च–

**अष्टावप्रमुखाः स्वपञ्चमपराः द्विघ्नः स्ववर्गोऽन्ययुक्तष्टः ।**
**काकिणिका गजैर्मिथ इमा यस्याधिकः सोऽर्थदः ।।३०।।**

सभी समानार्थक हैं, जिनको पूर्व में सोदाहरण प्रदर्शित किया गया है ।।३०।।

भूपालवल्लभे च–

**वर्गेशास्तार्क्ष्यमार्जारसिंहश्वासर्पमूषकाः ।**
**इभावी पूर्वतस्तेषां स्ववर्गात्पञ्चमो रिपुः ।।३१।।**

स्पष्टार्थः ।

ज्योतिःसारे च–

**केऽप्याहुरथ वर्गाणां स्वस्थाने शु ، गृहम् ।।$^{1}/_{2}$।।**

स्पष्ट एव ।

वराहस्तु–

**गृहनगरग्रामेषु च सर्वत्रैवं प्रतिष्ठिता देवाः ।**
**तेषु यथाऽनुरूपं वर्णा विप्रादयो वास्याः ।।३२।।**
**वासगृहाणि च विद्याद् विप्रादीनामुदग्दिगाद्यानि ।**
**विशतां च यथा भवनं भवन्ति तान्येव दाक्षिण्याः ।।३३।।**
**पुरभवनग्रामाणां ये कोणास्तेषु निवसतां दोषाः ।**
**श्वपचादयोऽन्त्यजात्यास्तेष्वेव विवृद्धिमायान्ति ।।३४।।**

गृह नगर ग्रामादिकों में वास्तु निर्दिष्ट (स्वस्व) स्थानों में देवता का निवास बताया गया है, अतः देवता के उद्देश्य से पूज्य देव के स्थानों में विप्रादि वर्णों को अपने-अपने अनुकूल देवस्थान में निवास करना श्रेयस्कर होता है। इस नियम के अनुसार ब्राह्मण उत्तर, क्षत्रिय पूर्व, वैश्य दक्षिण व श्वपचादि अन्त्यज जातियाँ कोणों में निवास करें। यह वासस्थान वर्णानुकूल उत्तरादि प्राक्दक्षिण क्रम से निर्दिष्ट है, जिसका विवरण इस श्लोक की व्याख्या के पूर्व पंक्ति में उद्धृत है। अन्त्यजों की वृद्धि कोण निवास से ही होती है ।।३२-३४।।

**।। इति ग्रामादिवासो नाम द्वितीयं सोपानम् ।।**

○

# अथ स्थानचयनं नाम तृतीयं सोपानम्

**सचिवालयेऽर्थनाशो धूर्तगृहे सुतवधः समीपस्थे।**
**उद्वेगो देवकुले चतुष्पथे भवति चाकीर्तिः ।।१।।**

नगर-ग्राम पुर प्रभृति स्थानों में सचिव गृह के समीप निवास से अर्थहानि, धूर्त गृह के समीप पुत्रवध, देवकुल के सन्निकट उद्वेग, चतुष्पथ के पास निवास से अपकीर्ति बढ़ती है ॥१॥

**चैत्ये भयं ग्रहकृतं वल्मीकश्वभ्रसंकुले विपदः।**
**गर्तायान्तु पिपासा कूर्माकारे धनविनाशः स्यात्।।२।।**

ग्राम या नगर के प्रधान वृक्ष को चैत्य वृक्ष कहते हैं, उसके समीप निवास से भूतादि पीडा होती है। वेमुअटि की ढेर के पास विपत्ति, गर्त या गढ़ा के समीप निवास से तृषा (अतृप्ति) बनी रहती है, कूर्मपृष्ठ भूमि में निवास से धन की हानि होती है ॥२॥

पुराणेषु–

**मन्दरस्य शिरः शृङ्गे महावृक्षश्च केतुराट्।**
**आलम्ब्य शाखाशिखरः कदम्बश्चैत्यपादपः ।।३।।**

इति चैत्यवृक्षलक्षणम्।

**रजकश्चर्मकारश्च नटो वरुड एव च।**
**कैवर्तो भेदभिल्लाश्च सप्तैतेऽन्त्यजाः स्मृताः ।।४।।**

स्थानेषु भूमिचयनम्–

**स्फुटिता च सशल्या च वल्मीका रोहिणी तथा।**
**दूरतः परिवर्ज्येयं कर्तुरायुर्धनापहा।।५।।**

फटी-कटी ऊबड़-खाबड़ निम्नोन्नत सशल्य वेमुअटिच्छादित भूमि का सर्वथा त्याग करना उचित है, अन्यथा गृहस्वामी की आयु व धन की हानि होती है ॥५॥

कूर्मभूमिः –

**मध्ये तूच्चं भवेद् यत्र नीचं चैव चतुर्दिशम्।**
**कूर्मपृष्ठा भवेद्भूमिस्तत्र वासो न कारयेत्।।६।।**

मध्य में सर्वोन्नत और चारों तरफ नीची भूमि हो, उसे कूर्मपृष्ठ भूमि कहते हैं, वहाँ निवास बनाना श्रेयस्कर नहीं होता है ॥६॥

अत्रैव मतान्तरम्–

**कूर्मपृष्ठे भवेद्वासो नित्योत्साहसुखप्रदः।**
**धनं धान्यं भवेत्तत्र निश्चितं विपुलं धनम्॥७॥**

स्पष्टार्थ। यहाँ मतभेद में हेतु यह है कि मध्य भाग सर्वोत्कृष्ट समुन्नत और चारों तरफ शिखरवत् ढाल हों तो निषिद्ध है व पृष्ठ पर जल गिराने पर सामान्य रूप से बहाव और उतरते समय प्रपतन का भय न हो व चतुर्दिक्षु प्लव भी हो तो शुभ है ॥७॥

दैत्यपृष्ठभूमिलक्षणम्–

**पूर्वाग्निशम्भुकोणेषु उन्नतिश्च यदा भवेत्।**
**पश्चिमे च यदा नीचं दैत्यपृष्ठमभिधीयते॥८॥**

पूर्व-अग्नि व ईशान अर्थात् ईशान से अग्नि तक विषम रीति से ऊँची हो व पश्चिम दिशा की निम्न भूमि को दैत्यपृष्ठ कहते हैं ॥८॥

फलम्–

**दैत्यपृष्ठे भवेद्वासो लक्ष्मी नायाति मन्दिरे।**
**धनधान्यपशूनां च हानिरेव न संशयः॥९॥**

दैत्यपृष्ठ भूमि के वास से लक्ष्मी का आगमन अवरुद्ध, धन-धान्य व पशुओं की हानि होती है, इसमें कोई संशय नहीं ॥९॥

नागपृष्ठभूमिलक्षणम्–

**पूर्वपश्चिमयोर्दीर्घा दक्षिणोत्तर उच्चता।**
**नागपृष्ठं विजानीयात् कर्तुरुच्चाटनं भवेत्॥१०॥**
**नागपृष्ठे भवेद्वासो मृत्युरेव न संशयः।**
**पत्नीहानिः पुत्रहानिः शत्रुवृद्धिः पदे पदे॥११॥**

पूर्व-पश्चिम लम्बा, दक्षिण व उत्तर उच्च भूमि नागपृष्ठ कही जाती है। इस पर वास से गृहस्वामी का उच्चाटन, मृत्यु, पत्नी, पुत्र की हानि व शत्रु की वृद्धि होती है ॥१०-११॥

गजपृष्ठभूमिलक्षणम्–

**दक्षिणे पश्चिमे चैव नैर्ऋत्ये वायुकोणके।**
**एभिरुच्चे भवेद्भूमिर्गजपृष्ठो विधीयते॥१२॥**

**गजपृष्ठे भवेद्वासः सलक्ष्मीधनपूरितः।**
**आयुर्वृद्धिकरी नित्यं जायते नात्र संशयः।।१३।।**

दक्षिण नैऋत्य पश्चिम व वायव्य कोण में उन्नत हो, तो वह भूमि गजपृष्ठ होती है। इस पर वास से लक्ष्मी धन-आयुष्य की वृद्धि होती है ॥१२-१३॥

अथ भूमेराकृतिः—

**आयतेः सिद्धयः सर्वाश्चतुरस्त्रे धनागमः।**
**वृत्ते तु बुद्धिवृद्धिः स्याद्भद्रं भद्रासने भवेत्।।१४।।**
**चक्रे दारिद्र्यमित्याहुर्विषमे शोकलक्षणम्।**
**राजभीतिस्त्रिकोणे तु शकटे तु धनक्षयः।।१५।।**
**दण्डे पशुक्षयं प्राहुः सूर्पे वासे गवां क्षयः।**
**कूर्मे तु बन्धनं पीडा धनुःक्षेत्रे भयं महत्।।१६।।**
**कुम्भाकारे कुष्ठरोगो भवत्येव न संशयः।**
**पवने नश्यति नेत्रं च मुरजे बन्धुविनाशनम्।।१७।।**

स्थान चयन के अन्दर भूमि की आकृति (बनावट) भी आती है, इसके अनुसार समकोण समायत भूमि सर्व प्रकार की सिद्धि की द्योतक होती है।

चतुष्कोण समचतुर्भुज भूमि का निवास धनागम का स्रोत है। वृत्ताकार भूमि बुद्धि, भद्राकार भूमि सभी प्रकार के भद्र मंगलकारिणी होती है। चक्राकार (कुम्भाकार चक्रवत्) दरिद्रता की जननी, विषमबाहुक भूमि शोकप्रद, त्रिकोण राजभीति, शकट लोकप्रसिद्ध बैलगाड़ी की आकृति की धननाश, दण्ड व यष्टि जैसी अनावश्यक अति लम्बी भूमि क्षय, सूर्पाकार लोकप्रसिद्ध वस्तु (सूपा) श्वपच जिसका निर्माण कर जीविकोपार्जन करते हैं, तदाकार भूमि गोनाशकारिणी (गो पशु विशेष एवं गो इन्द्रिय) अर्थात् इन्द्रियविकृत प्राणी की जन्मदात्री है। कूर्माकार बन्धन (कारागार) भय,धनुषाकार भूमि महद्भयोत्पादक, कुम्भाकृति भूमि कुष्ठरोग जननी, पवनाकार पूर्व-पश्चिमायत भूमि नेत्रदोषोत्पादिका, मृदंगाकार भूमि धन-बन्धुनाशकारिणी होती है, अतः आकृति भी निवास में प्रशस्त सुखोपलब्धि में हेतु होने से परमावश्यक है ॥१४-१७॥

**।। इति स्थाननिरूपणं नाम तृतीयं सोपानम्।।**



## अथ परीक्षणेन भूमिचयनं नाम तुरीयं सोपानम्

तत्र तावत्पूर्वं वर्णानुसारेण भूमिपरीक्षणं वास्तुप्रदीपे–

**शुक्लमृत्स्ना च या भूमिर्ब्राह्मणी सा प्रकीर्तिता।**
**क्षत्रिया रक्तमृत्स्ना च हरिद्वैश्या प्रकीर्तिता।।१।।**
**ब्राह्मणी भूः कुशोपेता क्षत्रिया शरसंकुला।**
**कुशकाशाऽऽकुला वैश्या शूद्रा सर्वतृणाकुला।।२।।**
**ब्राह्मणी सर्वसुखदा क्षत्रिया राज्यदा भवेत्।**
**धनधान्यकरी वैश्या शूद्रा तु निन्दिता भवेत्।।३।।**

समस्त श्वेत भूमि ब्राह्मणी, रक्ता क्षत्रिया, हरित भूमि वैश्या व कृष्णा भूमि शूद्रा होती है, पुनः कुश से व्याप्त भूमि ब्राह्मणी, शर (सर्पत-राड़ा-डभिला ये एक कोटि के तृण हैं) संकुला क्षत्रिया, कुश-काशोपेत भूमि वैश्या एवं अनेक तृणों से उपेत भूमि शूद्रा नाम से प्रसिद्ध है। ब्राह्मणी भूमि समस्त सुखों की जननी, क्षत्रिया भूमि राज्य देती है। वैश्या भूमि धन-धान्य से परिपूर्ण करती है, शूद्रा भूमि सर्व दुर्गुणों की जननी होती है ॥१-३॥

ता एव भूमयो वर्णपरत्वेन यथा–

**श्वेता शस्ता द्विजेन्द्राणां रक्ता भूमिर्महीभृताम्।**
**विशां पीता च वैश्यानां कृष्णा शुभा तु शूद्राणाम्।।**
**शूद्रेतराणामन्येषां कृष्णा चैवापि मिश्रिता।।४।।**

श्वेत भूमि मात्र ब्राह्मण, रक्त वर्ण की भूमि क्षत्रिय, पीली भू वैश्य, कृष्णा भू शूद्र तथा शेष जातियों के लिये विमिश्रित भू सुखदायिनी होती है ॥४॥

वर्णानां कृते रसद्वारा भूपरीक्षणं नारदेन–

**मधुरं कटुकं तिक्तं कषायं च रसक्रमात्।**

उपकारिकायान्तु–

**घृतासृगन्नमद्यानां गन्धाश्च क्रमशो भवेत्।।५।।**

नारद जी के अनुसार ब्राह्मणादि चार वर्णों के लिये क्रमशः मधुर-कटुक (निम्बरस) तिक्त (मर्चा) व कषाय (हरा-बहेड़ा जैसा) रस भूमि प्रशस्त होती है । कारिका के अनुसार चार वर्णों के लिये क्रमशः घृत-असृग् (रक्त) अन्न व मद्यगन्धा व स्वाद की भूमि सुखद होती है ॥५॥

प्लवनेन च तत्रैव–

**श्रियं दाहं तथा मृत्युं धनहानिः सुतक्षयम्।**
**प्रवासं धनलाभं च विद्यालाभं तथैव च॥६॥**
**विदध्यादचिरेणैव पूर्वादिप्लवतो मही।**
**मध्यप्लवा मही नेष्टा न शुभा प्लवतत्परा॥७॥**

पूर्वादि आठ दिशाओं के प्लव भूमि का फल क्रमशः लक्ष्मीप्राप्ति, अग्निभय, मृत्युभय, धनहानि, पुत्रहानि, प्रवास, धनलाभ, विद्यालाभकारिणी है। मध्यप्लव चारों दिशाओं से जलागम अर्थात् जलनिवास गड्ढा जैसा स्थान वासयोग्य नहीं है । तथा जहाँ पर निरन्तर स्राव होता रहता है, वह भूमि भी शुभदायिनी नहीं होती ॥६-७॥

अन्येऽप्यत्र–

**शम्भुकोणे प्लवा भूमिः कर्तुः श्रीसुखदायिनी।**
**पूर्वप्लवा वृद्धिकरी धनदा तूत्तरप्लवा॥८॥**

ईशानकोण में प्लव भू श्री, सुख देने वाली है। पूर्वप्लवा परिवर्धनशील व उत्तरप्लवा धनदा होती है ॥८॥

**मृत्युशोकप्रदा नित्यं सर्वदा दक्षिणप्लवा।**
**गृहक्षयकरी सा च भूमिर्या निर्ऋतिप्लवा॥९॥**
**धनहानिकरी चैव कीर्तिदा वरुणप्लवा।**
**वायुप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी॥१०॥**

दक्षिण की प्लवा भूमि निरन्तर मृत्यु, शोकदायिनी, निर्ऋतिप्लवा भू गृह को नष्ट करती है। पश्चिम प्लव धनहानि करते हुए यशस्विनी होती है। वायुकोण की प्लव भूमि नित्य उद्वेग की जननी है ॥९-१०॥

अत्रैव भृगुश्च–

**उदगादिप्लवामिष्टां विप्रादीनां प्रदक्षिणेनैव।**
**विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्यच्च॥११॥**

महर्षि भृगु के अनुसार उत्तरप्लव भूमि ब्राह्मण, पूर्वप्लव क्षत्रिय, दक्षिणप्लव वैश्य व पश्चिमप्लव शूद्र तथा सर्वदिशाओं में समान प्लव भूमि ब्राह्मणों के लिए इष्टदायिनी है ॥११॥

वास्तुशास्त्रे च–

**मनसश्चक्षुषो यत्र सन्तोषो जायते भुवि।**
**तस्यां कार्यं गृहं सर्वैरिति गर्गादिसम्मतम्।।१२।।**

जहाँ पर मन प्रसन्न हो, आनन्द की अनुभूति हो और देखने से भी प्रसन्नता व सन्तुष्टि हो, उस भूमि पर सभी व्यक्ति निवास बना सकते हैं ।।१२।।

उर्वरक(उत्पादक)शक्त्या भूमिपरीक्षणं वराहमते–

**शस्तौषधिद्रुमलता मधुरा सुगन्धा, स्निग्धा समा न सुषिरा च मही नराणाम्।**
**अप्यध्वनि श्रमविनोदमुपागतानां धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ॥१३॥**

जिस भूमि के ऊपर सुगन्धित मनोहर जयन्ती जया प्रभृति लतायें, मन को ह्लाद करने वाले वृक्षगुल्म हों, देखने मात्र से स्नेह प्रकट होता हो । तथा आकृति में समान निम्नोन्नतरहित मूषकादि विवर या किसी प्रकार के दरार (सर्करा) से मुक्त जहाँ पर मार्गजनित श्रम का क्षणिक विश्राम से निराकरण व शान्ति सुख की अनुभूति हो, उस भूमि पर निवास बनाकर रहने पर सुखसुविधा व शान्ति शाश्वत बनी रहेगी । अर्थात् ऐसी भू सर्वदा सुखप्रसविनी होगी ।।१३।।

खननविधा भूपरीक्षणं वास्तुशास्त्रे–

**गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम्।**
**यन्न्यूनमनिष्टं तत्समे समं धन्यमधिकं च यच्च।।१४।।**

अन्यदपि–

**श्वभ्रमथवाम्बुपूर्णं शतपदमितगत्वाऽऽगतस्य यदि नोनम्।**
**तद्धन्यं यच्च भवेत्पलान्याढकं चतुःषष्टिः।।१५।।**

निवास के लिये सुनिश्चित क्षेत्र के मध्य में एक हाथ चौड़ा लम्बा व गहरा खात खोदकर निकाली हुई मिट्टी से पुनः खाते को भरने पर यदि खाता पूर्ण भर जाय व मिट्टी शेष भी रह जाय तो सर्वथा उत्तम है। सम होने पर सम व न्यून होने पर अशुभकारिणी भूमि है। अथवा खाते में जल पूर्ण कर समानगति से सौ पद जाकर पुनः परावर्तन पर्यन्त थोड़ा भी जल न्यून न हो, तो वह भूमि धन्य है। अथवा भूमि से निःश्रित मिट्टी चौंसठ आढ़क है, तो भी शुभ है ॥१४-१५॥

पराशरस्तु–

**निमेषशतमतीत्य स्यात्तच्छुभ्रजलगतां चारिणीम्।**
**समुद्धृतामापूर्यमाणामतिरिक्तां मृदं चतुष्षष्टिपलाढ्याम् ।।१६।।**

खाते को जल से पूर्ण कर शत निमेष ४० मिनट के बाद यदि खातस्थ जल यथावत् स्थिर है, तो शुभ अथवा खात से नि:सृत मिट्टी ६४ आढ़क है, तो भी शुभ है ॥१६॥

पुनस्तत्रैव–

**आमे वा मृतपात्रे श्वभ्रस्थे दीपवर्तिरभ्यधिकम्।**
**ज्वलति दिशि यस्य शस्ता भूमिस्तस्य वर्णस्य॥१७॥**

अथवा खात के अन्दर गोमय से उपलिप्य कच्चे मिट्टी के चार कसोरों में या एक ही में घृत से पूर्ण कर दीप जलाया जाय। वर्णों के अनुसार चार वर्तियों को चार वर्णों के प्रतीक मानसिक निश्चय करने के बाद घृत रहते हुए जिस वर्ण का दीप या वर्ति बुझ जाय, उस वर्ण के लिए वह भूमि शुभ नहीं है ॥१७॥

अपि च–

**श्वभ्रोषितं न कुसुमं यस्य न म्लायतेऽनुवर्णस्य।**
**तत्तस्य भवति शुभदं यस्य च यस्मिन्मनो रमते॥१८॥**

अथवा गोमयोपलिप्त खाते में वर्णोद्देश्य से चार पुष्प सायं रख दिया जाय, पुन: प्रात: जिस वर्ण का उद्देश्यक पुष्प म्लान न हो, उस वर्ण के लिए वह भूमि शुभ होगी, अन्यथा म्लान से अशुभ ॥१८॥

अत्र गर्गश्च–

**या यस्य राशितो भूमेर्भवेत्तु गृहकर्मणि।**
**तस्यां श्वभ्रं खनेन्मध्ये हस्तमात्रं समन्ततः॥१९॥**
**तच्छ्वभ्रं पूरयेत्तेन पांसुना सुविचक्षणः।**
**वर्द्धमाने च वृद्धिः स्याद् हीयमाने विगर्हिता॥२०॥**
**साम्ये साम्यं विनिर्दिष्टमथवाऽन्यद्विचारणम्।**
**पूरयित्वा तथा श्वभ्रं मृद्भिः[1] क्रमशतं व्रजेत्॥२१॥**
**पूर्णं स्यादागमनं यावत् सा भूमिस्तु प्रशस्यते।**
**तस्मिन्धारयेच्छ्वभ्रे चित्रं माल्यमनुक्रमात्॥२२॥**
**यच्चिरान्म्लायते माल्यं तद्वर्णं तत्र चावसेत्।**
**आमे वा मृण्मये पात्रे दीपवर्तिचतुष्टयम्॥**
**यस्यां दिशि प्रज्वलति चिरं तस्यैव सा शुभा॥२३॥**

पूर्वोक्तवदेवात: कृतभाष्यात्स्पष्टं वेति सर्वम्।

---

१. जलैरिति।

वर्णादिना भूपरीक्षणे वराहमतञ्च–

**सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः।**
**गन्धश्च भवति यस्यां घृतरुधिरान्नमद्यमयम्।।२४।।**
**कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही।**
**अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका।।२५।।**

वाराहोक्तमिदं सर्वमपि पूर्वोक्तश्लोकभाष्यानुरूपं भाष्यमिति। क्रम लक्षण वर्णानुसार ही फल प्रतिपदोक्त है ॥२४-२५॥

अत्रैव गर्गश्च–

**मधुरा दर्भसंयुक्ता घृतगन्धा च या मही।**
**उत्तरप्रवणा चेति ब्राह्मणानान्तु सा शुभा।।२६।।**
**रक्तगन्धा कषाया च शरवीणेन संयुता।**
**रक्ता प्राक्प्रवणा ज्ञेया क्षत्रियाणान्तु सा मही।।२७।।**
**दक्षिणप्रवणा भूमिर्याम्ला दूर्वासमाकुला।**
**अन्नगन्धा च वैश्यानां पीतवर्णा प्रशस्यते।।२८।।**
**पश्चिमप्रवणा कृष्णा विकृष्टा काशसंयुता।**
**मद्यगन्धा मही धन्या शूद्राणां कटुका तथा।।२९।।**

रस-गन्ध वर्ण तृण विशेष संकुल संयुक्त भूमि लक्षण वर्णों के अनुसार प्रतिपादित गर्ग जी के मत में सर्वातिशय सुस्पष्ट है, रसादि लक्षणों से समवेत एकीकृत लक्षणा भूमि सर्वसाधारणगम्य है। शेष स्पष्टार्थ है ॥२६-२९॥

भूशोधने पुनर्वराहः–

**कृष्टां प्ररूढबीजां गोऽध्युषितां ब्राह्मणैः प्रशस्ताञ्च।**
**गत्वा महीं गृहपतिः संवत्सरोद्दिष्टे।।३०।।**

**वराहमिहिर के अनुसार भूशोधन का विधान व उसके बाद के कृत्य का निर्देश**–हल से सुसंस्कृत भूमि में उत्तम अविकृत बीज बोने पर यदि समकाल और समान रूप से उत्पन्नांकुरवाली हो, तो वह भू वासयोग्य उत्तम होती है। तथा गायों के निवास व ब्राह्मणों से अधिवासित भूमि भी वासयोग्य है। इस प्रकार संशुद्ध भूमि पर सांवत्सरिक (ज्योतिषी) के निर्दिष्ट शुभ समय में जाकर भू-पूजनादि यथाशास्त्र गृहारम्भ सम्बन्धी कार्य का सम्पादन करें ॥३०॥

अत्रैव सूत्रधारोक्तम्–

**निष्पद्यन्तेऽधिकं यस्यां बीजान्युप्तान्ययत्नतः ।**
**कृष्टानुपहृतक्षेत्रे धन्या सा धान्यशालिनी ।।३१।।**

अच्छी प्रकार जोती हुई सरस भूमि में बोया गया बीज बिना प्रयास सर्वात्मना वा सर्वत्र अङ्कुरित दिखाई देने पर वह भूमि धन-धान्य-विवर्द्धिनी होती है ॥३१॥

**जीवन्ति क्षेत्रिणो यस्यां नदनद्यादिवारिभिः ।**
**तां देवमातृकेत्याहुरनपेक्षितवारिदाम् ।।३२।।**

जहाँ पर नद व नदियों के जल से नहरों के माध्यम से जल की आवश्यकता कृषि हेतु पूर्ण होती है, उस भूमि या देश को अदेवमातृका व मेघ के आश्रित भू व देश को देवमातृका कहते हैं। अदेवमातृका, जहाँ मेघ के जल की आवश्यकता नहीं[१] है अथवा देवमातृका, जहाँ वर्षा की अपेक्षा[२] है ॥३२॥

**शुभैः सुगन्धिभिः स्वादु शीतैः कान्तैरभङ्गुरैः ।**
**क्षेत्रैरक्षतसीमान्तैः सस्यनिष्पादिभिर्वृताः ।।३३।।**
**निष्कण्टकाश्मवल्मीकैः प्रभूतयवसेन्धनैः ।**
**विभक्तक्षेत्रसीमान्तैर्गोचरैरुपशोभिता ।।३४।।**
**स्थले तृणसमुद्राणामन्तरेषु वसुन्धराः ।**
**प्रशस्यन्ते समाऽऽसन्ना स्वादु शीतलवारयः ।।३५।।**
**दुरात्मनाऽधृष्या या तथाऽनेकाश्रयान्विताः ।**
**संरम्भस्त्रासनिर्मुक्तं मनश्च रमयन्ति याः ।।३६।।**
**तास्वेवं गुणयुक्तासु महीषु विनिवेशयेत् ।**
**यथास्थानं जनपदान् खेटग्रामपुरादिषु ।।३७।।**

**विशेष–** खेटस्य ग्रामस्य पुरस्य च लघु-मध्य-विस्तारतः सीमा निर्धारिताः , तदनुकूलमेव विन्न्यासेनैव सुखसुविधा भवन्ति ।

समतल (बराबर) सुगन्धित-सुन्दर-शीतल वक्रतारहित परिपूर्ण सीमा वाला देश-ग्राम-नगर या स्थान निवास के योग्य चयन करना चाहिए ।

जहाँ क्षेत्रों में विभक्त व पुष्कल (अधिक से अधिक) धान्य उत्पन्न होने वाले सीमाबद्ध क्षेत्र (खेत ) हों, गोचर (चरागाह) ही जिनकी सीमा निर्धारित करते हों, पशुओं के लिये प्रचुर मात्रा में घासें,व्यवहार में लाये जाने वाले

---

१. अदेवमातृको देशः। २. देवमातृक इति ।

इन्धनों की बहुतायत हो, काँटारहित वृक्ष, सुगोल सुशोभित पत्थरों की सरलता से उपलब्धि हो, वल्मीकरहित छोटे आकार में सुन्दर सस्य, समुद्रों नदियों के मध्य सुमधुर स्वादु जल की उपलब्धि वाली भू प्रशस्त मानी गई है, अर्थात् लोकानुभव में जो शुभ प्रशस्त हो, दुरात्माओं से अदृश्य-अगम्य सुजन समूह का निवास भय व्यग्रता रहित रमणीक मनोरम स्थानों से युक्त भूमि निवास के लिये प्रशस्त मानी गई है ॥३३-३७॥

वृक्षविशेषास्तत्रैव–

**कह्लार–पाटलाम्भोजमालती–चम्पकोत्पलैः ।**
**स्थलाम्बुप्रभवैश्चान्यैः सुगन्ध–कुसुमैस्तथा ।।३८।।**
**गोमूत्र–गोमय–क्षीर–दधि–मध्वाज्यगन्धभाक् ।**
**समानगन्ध–मदिरा–माध्वीकेभमदासवैः ।।३९।।**
**शालिपृष्टकगन्धैश्च धान्यगन्धैश्च या तथा ।**
**प्रशस्ताखिलवर्णानां मृदुगन्धा वसुन्धरा ।।४०।।**

श्वेतकमल-रक्तकमल-मालती-चम्पा-नीलकमल प्रभृति स्थलजन्य (भूमिज) अथवा जलज पुष्पों से सुगन्धित, गोमूत्र-गोमय-दूध-दही-घी-मधु प्रभृति यज्ञीय वस्तु पदार्थों के गन्धों से परिपूर्ण अर्थात् जिस भूमि में उपर्युक्त पदार्थों के गन्ध प्राप्त हों तथा मदिरा (माध्वीक) गजमद-आसव-मादक गन्धों से युक्त हो तथा शालिचूर्ण गन्धवती सुगन्ध धान्य गन्धवती भूमि सभी वर्णों के लिये शुभ है ॥३८-४०॥

पृथक् पृथग् वर्णानुकूला भूस्तत्रैव–

**सिता रक्ता च पीता च कृष्णा चैव क्रमान्मही ।**
**विप्रादीनां हि वर्णानां सर्वेषामथवा हिता ।।४१।।**
**स्वादुः कषाया तिक्ता च कटुका चेदनुक्रमात् ।**
**वर्णानां स्वादतः शस्ता सर्वेषां मधुरा तथा ।।४२।।**

स्पष्टाः—पूर्वोक्ता अप्यन्याचार्यमतत्वात्किञ्चिद्वैशिष्ट्याच्चोद्धृता इति ।

यद्यपि इस प्रकार का विवरण प्रस्तुत किया जा चुका है, तथापि प्रमाणबाहुल्य व पूर्वोक्त से कुछ भिन्न होने से ही विशिष्ट प्रौढ़ता के लिये उपर्युक्त का उद्धरण किया गया है।

**विशेष–** मधुरा भूमि सभी वर्णों के लिये प्रशस्त है, यह पूर्वोक्त से विशिष्ट है ॥४१-४२॥

अन्यदपि वासयोग्या भूर्वा देशस्थानानि च तत्रैव–

**घर्मागमे हिमस्पर्शा स्यादुष्णा च हिमागमे।**
**प्रावृष्युष्णहिमस्पर्शा स्यात् प्रशस्ता वसुन्धरा।।४३।।**

ग्रीष्म ऋतु में शीतलस्पर्शा, शीत में उष्णस्पर्शा, वर्षा में शीतोष्णस्पर्शा भूमि स्थान या देश निवास योग्य हैं ।।४३।।

ध्वन्यनुसारम्–

**मृदङ्ग–वल्लकी–वेणु–दुन्दुभीनां समाध्वनौ।**
**द्विपाश्वाब्धिसमस्वाना चेति स्युर्भूमयः शुभाः।।४४।।**

मृदङ्ग-वल्लकी-वेणु-दुन्दुभी-हस्ति-अश्व व समुद्र के सदृश शब्दायमान भूमि आवासयोग्य मानी जाती है ।।४४।।

तत्रैव त्याज्यभूमिलक्षणम्–

**भस्माङ्गारकपालास्थितुषकेशविषमाश्मभिः।**
**मूषकोत्करवल्मीक–शर्कराभिश्च निर्भरा।।४५।।**
**रुक्षा प्ररोहिणी निम्ना भङ्गुरा सुषिरोषरा।**
**वामावर्तजलश्राविण्यसारा विषमोन्नता।।४६।।**

राख-कोयला-अस्थि-तुष-केश से परिभूत व मूषकादि विवरवती, वल्मीक स्थान वालुकामय कूड़ा कतवार संकुल, रुक्ष-उदासीन नीचोच्चोन्मुखी वक्रा खरपटादि कङ्कणादियुक्त ऊषर वामावर्तजलवाहिनी साररहित (रेहयुक्त) ऊँची-नीची (ऊबड़-खाबड) भूमि निवास के योग्य नहीं है, सर्वथा त्याज्य करनी चाहिये ।।४५-४६।।

**कटु–कण्टकि–निःसार–शुष्कनिष्फलपादपाः।**
**क्रव्यादिपक्षिसमाकीर्णा कृमिकीटवती च या।।४७।।**
**सदैव धूम्रवर्णा या मिश्रवर्णाऽथवा मही।**
**विवर्णा रुक्षवर्णा वा सा न स्यादिष्टदायिनी।।४८।।**
**तिक्ताम्ललवणा चापि भूमिर्या स्वेदला भवेत्।**
**तां लोकविद्वेषकरीं त्यजेत् पुरनिवेशने।।४९।।**

कटु (निम्बरस) कण्टकी निःसार (निस्तत्त्व) (जिगिना-सेमर-वैर-ताड़) शुष्क-फलरहित क्रव्यादि पक्षियों के घोसले वाले या इनके निवास वृक्ष, कृमि-कीटों से युक्त (कीड़ों वाले) वृक्षों से युक्त भूमि सर्वथा त्याज्य है। निरन्तर स्वाभाविक धूम्रवर्ण की (मटमैली) अनेक वर्ण वाली व

विवर्ण रुक्षवर्ण भूमि भी त्याज्य है। तिक्ता अम्ला लवणा (नमकस्वादिनी) भूमि सर्वदा स्वेदवती व ईषत् जलस्राविणी भूमि लोकविद्वेषकारिणी होती है, पुरादि निवेश के लिये सर्वथा त्याज्य है। ॥४७-४९॥

**या रुक्षा खरसंस्पर्शा सदैवोष्णा हिमाऽथवा।**
**अनिष्टसुखसंस्पर्शा या सा तामपि सन्त्यजेत्॥५०॥**
**क्रोष्टूष्ट्रश्वाखरश्वाना या च निर्झरनिःस्वना।**
**भिन्नभाण्डसमा क्रूरध्वनिताऽपि च नेष्यते॥५१॥**

सदैव रुक्षस्पर्शा, तीक्ष्णस्पर्शा, उष्णा या शीतला, अप्रियस्पर्शा भूमि सर्वथा त्याज्य है। शृगाल-श्वान-उष्ट्र-खर के शब्द जैसी शब्दवती व निर्झर व भिन्न पात्र जैसी क्रूर शब्दवती भूमि भी त्याज्य है ॥५०-५१॥

**इति गन्धादिभिर्भूमिः कथितेयं शुभाशुभा।**
अथ भूमिस्थशल्यफलज्ञानाय सूत्रधारः–
**हलेन कृष्यमाणायां भूमौ काष्ठसमुद्धृते॥५२॥**

उपर्युक्त गन्धादि द्वारा भूमि का शुभाशुभ ज्ञान कर अब हलोत्कृष्ट भूमि से निःसृत शल्यों का शुभाशुभ फल निम्न है। काष्ठरूप शल्य का फल अग्रिम श्लोक से है ॥५२॥

**विद्याद् भयं वह्निभयमिष्टिकायां धनागमम्।**
**पाषाणेषु च कल्याणं कुलध्वंसः समस्थिषु॥५३॥**

हल से जोतने पर भूमि से काष्ठ निकलता है, तो अग्नि का भय, इष्टिका से धनागम, पाषाण से मंगल, अस्थि से कुल का ध्वंस होता है ॥५३॥

**सरीसृपेषु सर्वेषु स्तेनेभ्यो भयमादिशेत्।**
**अनूषरा बहुतृणा शस्ता स्निग्धोत्तरप्लवा॥**

सभी जाति के सरीसृपों से चोरों का भय होता है और स्निग्ध उर्वरक तृणबहुला और उत्तरप्लवा भूमि प्रशस्त मानी गई है।

**प्रागीशप्लवा सर्वप्लवा वा दर्पणोदरा॥५४॥**

प्राग्, ईशान, सर्वदिक्षुप्लवा व दर्पण के उदर समान समतल भूमि भी सर्वसुखदायिनी होती है ॥५४॥

भूमिपरीक्षणे खातखननात्पूर्वकृत्यं सूत्रधारः–
**शुभेऽहन्युपोषितः स्नातः शुचिः शुक्लस्रगम्बरधरः।**
**स्वस्ति विप्रान् वाचयित्वा वास्तुदेवान् समर्च्य च॥५५॥**

**करप्रमाणं कुर्वीत खातं तद्भूमिमध्यगम्।**
**ततस्तन्मृदमाकृष्य तत्तथैवानुपूरयेत्।।५६।।**
**खाताधिकमृदूक्ता भूः श्रेष्ठा मध्या च तत्समा।**
**प्रहीणखातमृत्क्षोणी हीना शस्ता न सा शुभा।।५७।।**

ब्राह्मणों द्वारा स्वस्तिवाचनपूर्वक वास्तुदेवों का विधिवत् सबलि पूजन करके वास्तु क्षेत्र के मध्य में घन हस्त प्रमाण खात खनें व खातनिःसृत मृद से ही खात को पूर्ण कर (भर) देवें। यदि खात भरने से शेष मिट्टी बच जाती है, तो सर्वोत्तम, बराबर में मध्यम, न्यून में हानि अर्थात् खात पूर्ति न हो सके, तो वह भूमि शुभ नहीं है ॥५५-५७॥

खातमध्यदृश्यवस्तुफलं तत्रैव—

**खन्यमाने यदा खाते तन्मृदोऽन्तर्विलोकयेत्।**
**मणिशङ्खप्रवालादि तदातिश्रेयसी क्षितिः।।५८।।**
**सापि प्रशस्यते भूमिर्यस्यां स्युः खातपांसवः।**
**तुष—केशोपलाङ्गार—भस्मास्थिलववर्जिता।।५९।।**

यदि खात की मिट्टी के अन्दर मणि-शंख-मूँगा प्रभृति रत्न दिखाई दें, तो वह भूमि अत्यन्त कल्याणकारिणी होगी और यदि खात पांसु-तुष-केश-भस्म-कोयला-शल्य से भी हीन हो, तो वह भूमि शुभ है ॥५८-५९॥

**भृत्वाद्भिः खातमापूर्णे तस्मिन् शतपदं व्रजेत्।**
**तावच्वेदागमनेऽम्भः स्यात्ततो भूः सार्वकामिकी।**
**मध्यमात्रप्रहीणे स्यात् ततो हीनतरेऽधमा।।६०।।**

स्पष्टार्थः पूर्वोक्तत्वात् ॥६०॥

**इत्येवं कीर्तिताः कार्त्स्न्याल्लक्ष्माभिः पूरभूमयः।**
**खर्वटग्रामखेटानामेता एव स्मृता हिताः।।६१।।**

इस पूर्वोक्त भूमि का शुभत्व ग्राम-खेट-खर्वट-प्रभृति सर्वत्र ग्रहण किया जा सकता है ॥६१॥

**।। इति प्रत्यक्षदृष्टं भूमिलक्षणेन भूपरीक्षणं नाम तुरीयं सोपानम्।।**



# अथ शकुनैर्भूपरीक्षणं नाम पञ्चमं सोपानम्

अथात्र शाकुनिकैः कृत्यं तावत्पूर्वमुद्ध्रियते–

वराहः–

**भक्षैर्नानाकारैर्दध्यक्षत–सुरभिकुसुमधूपैश्च ।**
**दैवतपूजां कृत्वा स्थपतीनभ्यर्च्चर्य विप्रांश्च ।।१।।**

तत्र शकुनप्रकारः–

**विप्रः स्पृष्ट्वा शीर्षं वक्षश्च क्षत्रियो विशश्चोरू ।**
**शूद्रः पादौ स्पृष्ट्वा कुर्याद्रेखां गृहारम्भे ।।२।।**
**सम्मार्जनिनाञ्जनेन सेकेनोल्लेखनेन वा ।**
**गवाञ्च सन्निवासेन भूमिः शुध्यति पञ्चभिः ।।३।।**

गृहारम्भ के समय वक्ष्यमाण शलाका से ब्राह्मण शिर, क्षत्रिय वक्षस्थल, वैश्य ऊरू व शूद्र चरणों का स्पर्श करके सीमाबद्ध करने के लिये रेखा करे या बनावे। उस समय वक्ष्यमाणोक्त शकुनों से शुभाऽशुभ शाकुनिक निर्धारण करे। इसके पूर्व सम्मार्जन, उल्लेखन, लेप-सिञ्चन व गोवास इन पाँच प्रकार से भूमि की शुद्धि की जा सकती है; किन्तु इन परीक्षणों के पूर्व भक्ष्य-भोज्य-फल-पुष्प-दूर्वा-दही प्रभृति समस्त पूजन सामग्रियों से वास्तुदेवों को पूजन व बलि से सन्तुष्ट करना चाहिए ॥१-३॥

पूर्ववत्सम्यक् पूजनोपरान्तरेखाकरणं गृहसीमानिर्धारणाय–

वराहः–

**अङ्गुष्ठेन कुर्यान् मध्यमाङ्गुल्याऽथवा प्रदेशिन्या ।**
**कनकमणिरजतमुक्तादधिफलकुसुमाक्षतैश्च शुभम् ।।४।।**
**शस्त्रेण शस्त्रमृत्युर्लोहेन भस्मनाऽग्निभयम् ।**
**तस्करभयं तृणेन च काष्ठोल्लिखिता च राजभयम् ।।५।।**
**वक्रा पदाभिलिखिता शत्रुभयं क्लेशदा विरूपा च ।**
**चर्माङ्गारास्थिकृता दन्तेन च भर्तुरशिवाय ।।६।।**
**वैरं सव्यलिखिता प्रदक्षिणं सम्पदो विनिर्देश्यम् ।**
**वाचः परुषा निष्ठीवितं क्षुतञ्चाऽशुभं कथितम् ।।७।।**

रेखा करने का नियम व वस्तु का निर्देश–

अंगुष्ठ-मध्यमांगुली-प्रदेशिनी-सुवर्ण-मणि-रजत-मुक्ता-दही-फल-पुष्प-अक्षत से रेखा करना (सीमानिर्धारण) शुभ है। यदि वहीं रेखा (सीमा-निर्धारण) में शस्त्र का प्रयोग किया जाय तो कर्ता की मृत्यु शस्त्र से होती है। लौह व भस्म से अग्निभय, तृण से तस्करभय,काष्ठ से राजभय,वक्र रेखा या चरण से की गई रेखा से शत्रुभय,विरूप रेखा क्लेशदायिनी,चर्म-कोयला-अस्थि-दन्त से कृत रेखा स्वामी के लिये सर्वविध अकल्याणकारिणी है। उपर्युक्त किसी वस्तु से वामावर्त की जाने वाली रेखा वैरोत्पादिनी और उपर्युक्त शुभ वस्तु विहित दक्षिणावर्त रेखा सम्पत्तिकारिणी होती है। यदि रेखा करते समय कठोर वचन का उच्चारण हो या खखार-कफ-खाँसी-थूकना अथवा छींक आने पर अशुभ की सूचना है ॥४-७॥

वास्तुसीमानिर्धारणाय शंकुनिखातशकुनं वराहः–

**अर्धनिचितं कृतं वा प्रविशन् स्थपतिगृहे।**
**निमित्तानि अवलोकयेद् गृहपतिः किञ्चाङ्गम्॥८॥**
**स्वस्य च किमङ्गं स्पृशति गृहपतिरिति निश्चित्यावलोकयेत्।**
**रविदीप्तौ[1] यदि शकुनिस्तस्मिन् काले विरौति परुषरवम्॥**
**संस्पृष्टाङ्ग[2] समानं तस्मिन् देशेऽस्थि निर्देश्यम्॥९॥**

सीमानिर्धारण के लिये शंकु निवेश करते हुए शंकु का आधा या कुछ भाग भूमि में प्रविष्ट हो चुका हो, उस समय रविदीप्त दिशा के सम्मुख बैठा कोई पक्षी कठोर रुक्ष शब्द करता हो तो गृहस्वामी जिस स्थान में स्थित या पक्षी के उपवेशन स्थान में गृहपति से स्पृष्टांग सदृश नीचे उस स्थान में अस्थि-शल्य है ॥८-९॥

---

दीप्तादि दिशा का ज्ञान–

(१) सूर्योदय से प्रातः एक याम तक ईशान दिशा अङ्गारिणी, पूर्व दीप्ता, अग्निकोण धूमिता और शेष पाँच दिशायें शान्ता होती हैं एवं प्रथम प्रहर के बाद दूसरे प्रहर तक पूर्व दिशा अङ्गारिणी, अग्नि दीप्ता व दक्षिण दिक् धूमिता तथा शेष पाँच शान्ता होंगी, इस प्रकार प्रहर के अनुसार दिशादि बदलती रहेंगी।

(२) गृहस्वामी अपने जिस अङ्ग का स्पर्श करे,उतने ही नीचे शल्य है।

आगमान्तरे तु–

**पृच्छाकाले गृहस्वामी यदङ्गं स्पृशति स्वकम्।**
**भुवो हस्तप्रमाणेन शल्यं ब्रूयात्तदङ्गजम्।।१०।।**

प्रश्न के समय प्रश्नकर्ता अपने जिस अङ्ग का स्पर्श करता है, उसी अंग के समान हाथ नीचे भूमि में शल्य है अथवा उतना ही नीचे स्पृष्ट अङ्ग सम्बन्धी हड्डी है ॥१०॥

अन्यदपि शकुनसमये वराहः–

**शकुनसमयेऽथवाऽन्ये हस्त्यश्वश्वादयोऽनुवासन्ते।**
**तत्प्रभवमस्थि तस्मिन् तदङ्गसम्भूतमेवेति।।११।।**

भूमि परीक्षण में शंकु-निवेश या सूत्र-प्रसारण के समय हाथी-घोड़ा-श्वान प्रभृति कोई भी प्राणी भूमि के जिस ा में आकर बैठता है या शब्द करता है अथवा उस समय जिस प्राणी का शब्द सुनाई दे, तो उपविष्ट प्राणी या शब्दायमान प्राणी स्थित स्थान अथवा अन्यत्रस्थ प्राणी का शब्द सुनाई पड़े तो स्वामी जिस अंग का स्पर्श करता है, उसी अंग के समान नीचे भूमि में हड्डी है। अन्यत्र से भी शब्द श्रवण में स्वामी स्थित स्थान का निर्देश करना चाहिये ॥११॥

अपि च तत्रैव–

**सूत्रे प्रसारकाले गर्दभरावोऽस्थिशल्यमाचष्टे।**
**श्वाशृगाललङ्घिते वा सूत्रे शल्यं विनिर्देश्यम्।।१२।।**

सूत्र प्रसारण के समय गदहे का शब्द सुनाई दे, तो स्वामी जिस स्थान में स्थित है, उसी स्थान में स्वामी से स्पृष्ट अंगतुल्य नीचे शल्य है, अथवा श्वान प्रभृति जो भी प्राणी सूत्र का जिस स्थान में उल्लङ्घन करता है, उसी प्राणी के उल्लङ्घन स्थान में स्वामी के स्पृष्टाङ्ग तुल्य नीचे शल्य है ॥१२॥

तत्रैव–

**दिशि शान्तायां शकुनिर्मधुरविरावी यदा तदा वाच्यम्।**
**अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽङ्गे वा।।१३।।**

अत्रापि गृहपतिस्थितस्थाने अर्थाद् यत्र गृहपतिस्तिष्ठति तत्र शल्यं स्यात्।

पूर्वोक्त भूपरीक्षण सूत्र-प्रसारण या शंकुस्थापन के समय शान्त दिशा में शान्तदिङ्मुख उपविष्ट पक्षी यदि मधुर प्रिय कलरव करता है, तो गृहस्वामी या पक्षी स्थित स्थान में स्पृष्टाङ्ग सम भूमि में नीचे निधि है ॥१३-१४॥

हस्तप्रमाणे तु गृहपतिहस्तोच्छ्रितिसमतुल्यहस्तः। अर्थाद् ऊर्ध्वबाहुपुरुषस्य हस्तमिता या उच्छ्रितिस्तत्तुल्यहस्तमानमिति दिक्।

तथाऽत्र गर्गः–

**प्रश्नसमये गृहपतिः कस्मिन् स्थाने समाश्रितः।**
**किमङ्गं संस्पृशेद्वापि व्याहरेद्वा शुभाशुभम्।।१५।।**

स्थपति प्रश्न समय गृहस्वामी स्थित स्थान व उसकी चेष्टा तथा उच्चारण शब्दों के अनुसार शुभाशुभ का निर्धारण करे ॥१५॥

यथा–

**विलोक्य स्थपतिः पूर्वं पश्चाच्छल्यं विचारयेत्।**
**शङ्खभेरीमृदङ्गानां पटहानां च निःस्वनम्।।१६।।**
**दध्यक्षतानां पुष्पाणां फलानां दर्शनानि च।**
**प्रष्टुश्च प्रवदेच्छल्यं वास्तुविद्याविशारदः।।१७।।**
**दीपदिक्संस्थितः पक्षी विरौति परुषं रवम्।**
**स्पृष्टाङ्गसदृशं शल्यं तस्मिंस्स्थाने विनिर्दिशेत्।।१८।।**
**निखनेदवनिं तत्र यदङ्गं ब्रुवते तथा।**
**गृहनाथस्थतत्रस्थः शल्यं निःसंशयं वदेत्।।१९।।**

शाकुनिक उपर्युक्त स्वामी की चेष्टा प्रभृति शकुन के अनुसार व शंख-भेरी-मृदङ्ग व पटहा (नगारा) के शब्द श्रवण से शुभ, दही-अक्षत-पुष्प-दूर्वा-फल का दर्शन या किसी के द्वारा उच्चारित नाम से शुभ शकुन कहना चाहिये और दीप्ति दिशा में बैठा पक्षी यदि परुष स्वर उच्चारण करता है, तो उसी पक्षी स्थान में शल्य-स्वामी से स्पृष्टाङ्ग सम भूमितल में तथा जिस अंग को (गृहस्वामी) खुजलाता है, वास्तु पुरुष के उसी अङ्ग में शल्य है, हाथ निर्णय पूर्ववत् है ॥१६-१९॥

अपि च–

**प्रश्नकाले गजो गौर्वा तुरगो गर्दभोऽपि वा।**
**उष्ट्रो वा सारमेयो वा मार्जारः च्छागरोऽपि वा।।२०।।**
**यः प्राणी व्याहरेत्तत्र तदङ्गं शल्यमादिशेत्।**
**प्रमाणं तस्य वक्तव्यं पूर्वोक्तविधिना ततः।।२१।।**

प्रश्न के समय हाथी-गाय-घोड़ा-गदहा-ऊँट-श्वान-शृगाल-बिल्ली-छाग प्रभृति जो भी प्राणी शब्द करे या उस भूमि पर आ जाय, तो उस प्राणी के ही उपस्थित स्थान में शल्य[1] कहना चाहिये, हाथ का प्रमाण पूर्ववत् स्पृष्टाङ्ग समान होता है ॥२०-२१॥

तत्रैवाऽन्यदपि वराहः –

**सूत्रच्छेदे मृत्युः कीलेऽवाङ्मुखे महान् रोगः।**
**गृहनाथस्थपतीनां स्मृतिलोपे मृत्युरादेश्यः॥२२॥**
**स्कन्धाच्च्युते शिरोरुक् कुलोपसर्गोऽपवर्जिते कुम्भे।**
**भग्नेऽपि च कर्मिवधश्च्युते कराद्गृहपतेर्मृत्युः॥२३॥**

प्रारम्भ या प्रश्नकाल में पूजनोपयोगी वस्तुओं के चयन में सीमा-निर्धारक सूत्र के टूटने पर मृत्यु, कीलक गाड़ते समय अवाङ्मुख हो जाय, तो महान् रोगभय, पूजनीय कलश कन्धे से खिसक जाय, तो शिरोरोग का सूचक है, लुढ़क जाय तो कुल में विशेष उपद्रव सम्भव है । कुम्भ के फूट जाने पर कर्मी का वध, हाथ से गिर जाने पर गृहस्वामी की मृत्यु का सूचक है ॥२२-२३॥

भूशुभाशुभं ग्रन्थान्तरात्–

**चरणात्कर्णपर्यन्तं दण्डं सरलवंशजम्।**
**पूर्वतः पश्चिमं यांवदुत्तराद्दक्षिणं तथा॥२४॥**
**तयोश्च दण्डयोर्योगं कृत्वा भूमौ विलिख्य च।**
**अष्टभिश्च हरेद्भागं शेषाङ्केन शुभाशुभम्॥२५॥**
**प्रथमं रजकस्थानं चन्द्रवत्फलमादिशेत्।**
**द्वितीयं चर्मकारस्य क्षुत्पिपासाकुलो गृही॥२६॥**
**तृतीयं ब्राह्मणस्थानं जनोद्वासकरं गृहम्।**
**चतुर्थे शूद्रकस्थानं धन–धान्य–प्रदायकम्॥२७॥**
**पञ्चमे योगिनः स्थानं महदौदास्यकारकम्।**
**षष्ठे तु गोपकस्थानं सर्वसिद्धि–प्रदायकम्॥२८॥**
**सप्तमं क्षत्रियस्थानं सदा युद्धकरं नृणाम्।**
**अष्टमं चक्रिणः स्थानं मरणं रोगकारकम्॥२९॥**

अन्य प्रकार के शुभाशुभ ज्ञान–

चरण से कर्ण (कान) पर्यन्त सरल बाँस की शलाका से भूमि के चारों

१. उपस्थित प्राणी या अन्य किसी भी प्राणी का शल्य कहना चाहिये ।

समभुज क्षेत्र के भुजकोटि के माप के योग में आठ से भाग देने पर शेष से निम्न शुभाशुभ फल समझा जाय–

एक शेष में रजक स्थान है, इसमें वास से चन्द्रमा जैसी क्षीणता व वृद्धि होती रहेगी। दो शेष में चर्मकार स्थान है, इसमें गृही क्षुत्पिपासा से व्याकुल रहता है। तीन शेष में ब्राह्मण भूमि है, उद्वासकारक है। ४ शेष में शूद्र भूमि है, धन-धान्य की वृद्धि करती है। ५ शेष में योग भूमि है, महान् उदासीन उच्चाटनकारक है। ६ शेष में गोपस्थान है, सर्वसिद्धिप्रदायक है। ७ शेष में क्षत्रिय भूमि है, सर्वदा लड़ाई-झगड़ा कारिणी है। आठ शेष में चक्री भूमि है, मरण व रोगकारक है ॥२४-२९॥

पुनर्भूपरीक्षणं मानसमुनिकृतम्–

**भूमिपरीक्षणं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना।**
**दक्षिणे पश्चिमे चैव चोन्नतं चतुरस्रकम्॥३०॥**
**तद्वास्तु जायते वापि देवानां मनुजक्रमात्।**
**तुरङ्गा द्विरदं वेणुर्वीणा–सागरदुन्दुभिः॥३१॥**
**धेनुभिश्च समायुक्तं किञ्च पुन्नागजातिकम्।**
**सरसीरुहधान्यैश्च पाटलीपुष्पगन्धकैः॥३२॥**
**संयुक्ता सर्वबीजानां वर्धना चैकवर्णकम्।**
**निविडा स्निग्धसंयुक्ता सुखस्पर्शा च या भवेत्॥३३॥**

श्री मानसमुनि संक्षिप्त में शास्त्रानुमोदित भूमि-परीक्षण का प्रकार कहते हैं– दक्षिण व पश्चिम भाग में उच्च और चतुरस्र चतुष्कोण भूमि देव, मानव के निवास योग्य बतायी गयी है। जो भूमि हाथी-घोड़े-बाँस-वीणा-सागर-दुन्दुभि-धेनु से व्याप्त है, जहाँ पर उपर्युक्त वस्तु सामग्री व जीव उपलब्ध हों, वह भूमि प्रशस्त मानी गई है और पुंनाग, जाति-पुरुष व नाग जाति वाचक भूमि भी शुभ मानी गई है। कमल-धान्य-गुलाब के पुष्प जैसी गन्धवती, सभी प्रकार की बीजोत्पादिनी व एकवर्णा घनिष्ठ (कठोर सघन) स्तरवाली (खोखला ढील बालुकामय न हो) और स्पर्श मात्र से सुखानुभूतिकारिणी भूमि निवास के लिये शुभ मानी गई है ॥३०-३३॥

तत्रैव वृक्षवशेनापि शुभाशुभम्–

**श्रीवृक्षनिम्बाशोकैः संयुक्ता सप्तवर्णकैः।**
**चूतैश्चाप्यविषवृक्षैः संयुक्ता च समस्थला॥३४॥**

**धवलं रक्तवर्णञ्च स्वर्णं कृष्णं कपोतकम्।**
**षडस्त्रैश्च[1] समायुक्ता सर्वसम्पत्प्रदा धरा।।३५।।**

जो भूमि श्रीवृक्ष-निम्ब-अशोक-सप्तपर्ण (क्षितवन) आम प्रभृति वृक्षों को उत्पन्न करने वाली हो व आकार में समतल, श्वेत-रक्त-पीत-कृष्ण व कपोत के वर्ण की छः रसों वाली भूमि सम्पूर्ण सम्पदा देने वाली होती है।

**विशेष–** जिस वर्ण के लिये जो वर्ण शास्त्रान्तर से शुभ है, उसी वर्ण की भूमि यदि उपर्युक्त लक्षणोपेत हो, तो वर्णानुसारेण सर्वसम्पत्प्रदा होती है ॥३४-३५॥

पुनस्तत्रैव–

**दक्षिणावर्तसलिला दक्षिणाकारवर्णनैः।**
**मानवाञ्जलिमानेन दृष्टिनीलमनोहरा।।३६।।**
**कृमि–वल्मीक–रहिता निर्मूषी निष्कपालिनी।**
**निरस्थिसूक्तिसिकता–रन्ध्रवर्णा शुभावहा।।३७।।**
**पृथग्विधैश्च शूलैश्च स्थाणुभिश्च महीधृता।**
**सकर्दमितवाराही विलैका सरसंयुता।।३८।।**
**निस्तुषा निर्विभूतिश्च शर्करारहिताऽपि च।**
**सा भूमिर्ब्राह्मणादीनां वर्णानां सम्पदावहा।।३९।।**

भूमिसम्बन्धिविवेकः पूर्ववन् मानसमुनिना कृतः–

**दक्षिणावर्तजलवाहिनी प्रदक्षिणावर्तनिम्नगा।। प्रदक्षिणभ्रमणा।।**

मानवाञ्जलि मान से नीलकमल जैसी आभावाली मनोहर, कृमि-कीट-वेणु अरिष्ट-विवर-फटी (विवर्णस्फुटित) कपाल-ठिकड़ा-भूसी-भस्म-बालुका-शल्य-सूक्ति-(सीपी) सिकता-शूल-कण्टक विहीन व पानी पड़ने पर कीचड़मय हो जाय व खर-पतवाररहित कुशादि सस्योत्पादिनी भूमि ब्राह्मणादि वर्णों के लिए सम्पत्प्रदायिनी होती है ॥३६-३९॥

गन्धेन तत्रैव–

**मधुतैलादिगन्धा च दग्धदुर्गन्धिनी च या।**
**अण्डजा मीनगन्धा च शवगन्धा च वर्जिता।।४०।।**
**नृपप्रासादसंयुक्ता सभाचैत्यसमीपगा।**
**सकण्टतरुणोपेता द्रुमशालयुताऽपि च।।४१।।**

१. षडस्त्रैरित्यत्र षड्रसैरिति पाठः साधु प्रतिभाति।

मद्य-तेल (मिट्टी का तेल) दग्ध वस्तु के सदृश गन्धवती,अण्ड-मत्स्य-शव प्रभृति दुर्गन्धियुक्त भूमि का सर्वथा त्याग करना चाहिये और राज-सदन-सभामण्डप-चतुष्पथ ग्रामप्रधान वृक्ष, काँटे वाले वृक्षों तथा सेमर, ताड़ वृक्षों से युक्त भूमि या इनके समीप निवास निषिद्ध माना गया है ।।४०-४१।।

अन्यदपि तत्रैव–

**कूर्मोन्नता वर्तुला च त्रिकोण–वप्र–सन्निभा।**
**अञ्जनानां गृहच्छाया कर्मकारगृहैर्वृता ।।४२।।**
**चतुष्पथा चैकपथा द्विपथा पत्तनपथा।**
**मृदङ्ग–सदृशा गर्त–खगान्यमुखतोपमा ।।४३।।**
**झषोपमा चतुष्कोणा सर्वत्र प्रभवृक्षका।**
**शालैर्युक्तचतुष्कोणा चैत्यपादपसंकुला ।।४४।।**
**महासर्पाश्रिता वापि शालस्योद्यानमेव च।**
**वराहमर्कटप्राया रुद्राणामाश्रयं तथा ।।४५।।**

कूर्मोन्नत वर्तुला (गोल) त्रिकोण वप्राकार भूमि व बधिक कर्मकार के गृहों की छाया पड़ने वाली भूमि चतुष्पथ-एकपथ-द्विपथ-नगरपथ के समीप की भूमि, मृदङ्ग व उच्चनीचोन्मुख खग-(पक्षी) मत्स्य-चतुष्कोण प्रभावशाली वृक्षोत्पादिनी शालयुक्त चतुष्कोण-चैत्यवृक्षयुक्त महासर्पाश्रित वृक्ष शालोद्यान (शाल वन) इनके समीप की भूमि व वराह-मर्कट-रुद्रगणों से आश्रित भूमि का त्याग करना चाहिये ।।४२-४५।।

**उलूकानां काननानि पञ्चा[१]कृति सरी[२]सृपनिवासिनी।**
**पाञ्चजन्या खगप्राया विडाला खचरोपमा ।।४६।।**
**वेश्म गौरीनिभा वापि क्षुद्रजन्तूषरान्विता।**
**वास्तुशास्त्रविदामेवं विधानं सर्वथा त्यजेत् ।।४७।।**

उलूक पक्षी विशेष के समूहों से युक्त स्थल-वृक्ष, सरीसृप जीवों का निवास स्थल, पञ्चनखा पक्षी, विडालाकृति, गर्दभाकार भूमि व गौरी निवास स्थल (एक प्रकार के वर्षाती कीड़े जहाँ रहते हों), क्षुद्रजन्तु निवास या क्षुद्र प्राणियों के निवास स्थल का स्वनिवास के लिये सर्वथा त्याग करना चाहिये, यह वास्तुशास्त्रविदों का मत है ।।४६-४७।।

१. पञ्चाकृतिशूर्पणाञ्चेति मूलपाठः। २. सरीसृपनिवासिनाम् इति वा पाठः साधु।

विशेष:–

**बहुद्वारप्रवेशा च वर्मविद्धा च वर्जयेत्।**
**इत्थंभूतेऽपि वास्त्वादौ मोहात्कर्म करोति यः ।।४८।।**
**सदुष्कृतस्य सिन्धुः स्यात्तस्माद्बीजधरा शुभा।**
**बीजाभिवर्द्धिनी मधुव्रतै–र्मृगनाभिसुगन्धिनी ।।**
**सकलशिल्पिकरैरपि संस्कृता सकल–लक्षण–सन्निभा ।।४९।।**

जिस भूमि पर चतुर्धा मार्ग व वर्मवेध (छिन्न-भिन्न), हो उसे सर्वथा त्याग देना चाहिये। पूर्वोक्त दोषों से समवेत भूतल पर मोहवश निवास बनाने पर मनुष्य दुष्कृत्यों का सिन्धु बन जाता है। इसलिए बीजवर्द्धिनी मृगनाभिगन्धा मधुरगन्धा भूमि शुभ है ॥४८-४९॥

तत्रैव यत्र भूमौ वृक्षाः सन्ति तद्भूमिग्रहणे नियमाः–

**भूरुहच्छेदनात्पूर्वं बलिं कृत्वा यथाविधि।**
**पुण्याहं वाचयेत् पश्चात्तूर्यमङ्गलनिःस्वनैः ।।५०।।**

पूजनं बलिप्रकारस्तु–

**गच्छन्तु सर्वभूतानि राक्षसा देवता अपि।**
**अस्मात्स्थानान्तरं यायात्कुर्यां भूमिपरिग्रहम्।।५१।।**
**जप्त्वा मन्त्रमिमंपश्चाद्विहते कुम्भपरिग्रहात्।**
**स्थापयेत्सर्वबीजानि गोमयाक्तानि रूषिते।।५२।।**
**प्रेक्ष्य सस्यात्पल्लवानि निविडानि निरवग्रहान्।**
**तत्र धेनुवृषभनववत्सांश्चापि निवेशयेत्।।५३।।**

जिस भूमि पर वृक्ष हो या न हो तो भी भूमि ग्रहण के पूर्व निम्न क्रिया करनी चाहिये।

**विधि–** पूर्वदिन वृक्ष या भूमिस्थ देवादिकों का अपसारण यथा भूमि पर स्थित देवता-राक्षस प्रभृति जो भी अज्ञात नाम प्राणी हों, उनकी भक्ष्य-भोज्य-पुष्प-फल-दूर्वा-दधि प्रभृति पूजनीय द्रव्यों से पूजा करके उक्त मन्त्र से बलि देकर वृक्ष का छेदन अथवा भूमि ग्रहण किया जाय।

**मन्त्रार्थ–** हे भूमिस्थ वा वृक्षस्थ देवता-राक्षस जो भी भूत प्राणी यहाँ निवास करते हों, वे अन्यत्र चले जाँय, मैं इस भूमि को ग्रहण करूँगा। इस प्रकार मन्त्रोच्चारण करके भूमध्य में पुण्याहवाचनादि मांगलिक कार्य करके गड्ढा खोदकर गोमय से लीपकर सर्व प्रकार से वर्णोद्देश्यक सर्वबीज रख दिया जाय और दूसरे दिन जिस वर्ण का बीज गम्भीर या पल्लवित हो तथा क्षतविक्षत नहीं है, तो उस वर्ण के लिये अथवा सामान्य रूप से बीज क्षतविक्षत रहित अंकुरित या देखने में प्रिय हो, तो वह भूमि सभी सामान्य वर्णों के लिये प्रशस्त है ॥५०-५३॥

इतोऽन्यथापि खातेन परीक्षणं भुवस्तत्रैव—

भूतोत्सारणाऽनन्तरम्–

**विप्रैश्च पश्चात्पुण्याहं कारयेत्सर्वमङ्गलम्।**
**भूतलं खननं कुर्याद् वास्तुमध्ये लयावधि॥५४॥**

उपर्युक्त विधि से भूतोत्सारण के बाद वास्तु देवों की यथाविधि पूजा करके (पुण्याहवाचनपूर्वक) वास्तु के मध्य में धनहस्त खाता खनन करें या प्रस्तरपर्यन्त खनन किया जाय ॥५४॥

खाता का प्रमाण–

**चतुरस्त्रं तूपहतं हस्तमानन्तु भिन्नकम्।**
**वारिचत्वारिपरितं समं संक्षिप्य चोच्छ्रितम्॥५५॥**

खाता का १ हाथ चौड़ा लम्बा व गहरा माप होना चाहिये, जिसके अन्दर किसी प्रकार के छिद्र प्रभृति न हों ॥५५॥

**पूजयेत्तु यथाशास्त्रं प्रणम्य रूपमम्बिकाम्।**
**सर्वरत्नजलैश्चैव गन्धपुष्पाक्षतैरपि॥५६॥**
**पूजयेत्पायसान्नेन प्रभाते तु ततः सुधीः।**
**वापीसमीपे नियतः समाहितमनाः शुचिः॥५७॥**
**प्राचीदिक् शिरश्शेते तद्दर्भास्तरणभूतले।**
**"महाक्षोणि विवर्द्धस्व धान्यैश्च साधनैरपि॥५८॥**
**उत्तमं शुष्कमास्थाय भवत्यै मङ्गलं नमः"।**
**मन्त्रमेतं जपन्पश्चादुपवासमुपक्रमेत्॥५९॥**

खात में यथोपचार पूजनीय (सर्वौषधि-पञ्चगव्य-पञ्चामृत-पुष्पाक्षतादि) द्रव्यों से वास्तुदेव व भू का पूजन करके गड्ढे में जल पूर्ण करे और रात्रि में कुशा बिछाकर पूर्व शिर करके सोवे, सोने के पूर्व—

**"महाक्षोणि विवर्धस्व धान्यैश्च साधनैरपि ।**
**उत्तमं शुष्कमास्थाय भवत्यै मङ्गलं नमः" ।।**

यह मन्त्र पढ़कर भूमि को नमस्कार कर सो जाय अथवा यथासंख्य उपवासपूर्वक जप करे ।।५८-५९।।

**प्रभाते तु परीक्ष्येत रूपं स्थपतिभिः सुधीः ।**
**किञ्चिच्छेषं जलं प्रेक्ष्य गृह्यतां मङ्गलाय वै ।।६०।।**

उपर्युक्त मन्त्र जप उपवासादि क्रियोपरान्त प्रातः खात में यदि जल है, तो सर्वविध मङ्गलदायिनी भूमि है, ऐसा निर्देश करना चाहिये ।।६०।।

**शोषितं धन-धान्यानां क्षयं क्लिन्नं [१]विनाशितम् ।**
**परितस्तु मृदा गर्ते पूरिता मध्यमा मही ।।६१।।**
**मही हीना मृदा हीना चोत्तमा चापि चाधिका ।**
**प्रेक्ष्य कर्ता तु तन्मध्ये प्रदक्षिणचरोत्तमम् ।।६२।।**

यदि खात शुष्क है, तो धन-धान्य का क्षयकारक है; किन्तु कीचड़ मात्र से मध्यम है अथवा खात निःसृत मिट्टी से ही खात पूर्ण हो जाय व पूर्ति के बाद मिट्टी शेष हो जाय, तो उत्तम, हीन में हीन फल कहना चाहिये । पूर्वोक्त भी है; किन्तु प्रकारान्तर से पुष्टि हेतु उद्धृत है ।।६१-६२।।

**वास्तुक्षेत्रप्रमाणं च कल्पयित्वाऽस्य वामके ।**
**कुक्षौ खातं विधायादौ ग्रावभिः परिपूरयेत् ।।६३।।**

**विशेष—** श्लोक ६२ में प्रासङ्गिक शुद्ध पाठ प्रदक्षिणचरोत्तमं के स्थान पर प्रदक्षिणजलभ्रमं पाठ साधु होना चाहिए । इसके अनुसार खात के जल का परिभ्रमण यदि दक्षिणावर्त है, तो उत्तम है । इसका फलितार्थ "कामधेनु-समा क्षोणी स्वीकुर्यात्तु विभूतये"। अर्थात् पूर्वोक्त खात में जल के दक्षिणावर्त परिभ्रमण से वह भूमि कामधेनु जैसी सर्वाभीष्ट देने वाली है, अतः उसे स्वीकार करना चाहिए ।।६३।।

---

१. विनाशनम् इति साधु ।

खाते ज्योतिर्निबन्धः–

**षड्वर्गशुद्धसूत्रेण सूत्रिते धरणीतले।**
**सूत्रिते समये तस्मिन् सूत्रं केनापि लङ्घितम्।।६४।।**

वसिष्ठोऽप्यत्र–

**वास्तोः शिरसि पुच्छे च याम्यकुक्षौ तु पृष्ठतः।**
**आयुःकामः खनेन्नैव वामकुक्षौ खनिः शुभा।।६५।।**
**तदस्थि तत्र जानीयात् पुरुषस्य प्रमाणतः।**
**अभ्यक्तो दृश्यते यस्यां दिशि शल्यं समादिशेत्।।६६।।**

षड्वर्ग शुद्ध सूत्र से भूमि-सीमा निर्धारण के समय यदि कोई प्राणी सूत्र को लाँघता है, तो उस प्राणी की हड्डी उस भूमि में है अथवा अभ्यक्त तैललिप्त व्यक्ति के लङ्घन करने या दृश्य होने पर भी भूमिस्थ शल्य है,दोनों स्थिति में प्रथम शल्य प्रमाण पुरुषाधः व वक्ष्यमाण श्लोकानुसार ७० अंगुल नीचे शल्य है, ऐसा निर्देश करे ॥६४-६६॥

**तस्यामेव तदस्थीनि सप्तत्यङ्गुलमानतः।**
**सूत्रिते समये यत्र श्वा सद्मोपरि संस्थितः।।६७।।**
**तदस्थि तत्र जानीयात्षष्ट्यङ्गुलमिते क्षितौ।**
**उन्मादे चागते तस्मिन् समये यत्र संस्थिते।।६८।।**
**तदस्थि तत्र जानीयाद् हस्तद्वयमिते क्षितौ।**
**चाण्डाले जटिले वापि तदा तस्यां दिशि स्थिते।।६९।।**
**तदस्थि तत्र जानीयादशीत्यङ्गुलमानतः।**
**तस्मिन्नवसरे यत्र गृहदाहो भवेदपि।।**
**मेषास्थि तत्र जानीयात्पुरुषाङ्गप्रमाणतः।।७०।।**

सूत्र प्रसारण के समय कुत्ता यदि उस भूमि पर आकर बैठ जाय, तो उस उपवेशन स्थल में ६०(साठ) अंगुल नीचे कुत्ते की हड्डी है । उन्मत्त व्यक्ति के भूमि स्थल पर आ जाने से उस व्यक्ति (मानुष) की हड्डी दो हाथ के नीचे जहाँ वह व्यक्ति स्थित है, चाण्डाल या जटिल के उपस्थित भूमि में ८० अंगुल के नीचे मानव की हड्डी है ॥६७-७०॥

**नृगजाश्वपशूनां हि त्वेकस्मिन् यत्र संस्थितिः।**
**तदस्थि तत्र जानीयात्षष्ट्यङ्गुलमितक्षितौ।।७१।।**
**तस्मिन्नवसरे यत्र गृहदाहो भवेदपि।**
**मेषास्थि तत्र जानीयात् पुरुषाङ्गप्रमाणतः।।७२।।**

सूत्र प्रसारण के समय पशु या नर कोई भी भूमि पर आकर उपस्थित हो, तो ६० अंगुल नीचे उपस्थित भूमि में हड्डी है। सूत्र प्रसारण के ही अवसर पर यदि किसी के घर में आग लग जाय तो मेष नाम के पशु की हड्डी एक पुरुष नीचे है, जहाँ कर्ता उपस्थित है ॥७१-७२॥

अन्यदपि–

**सूत्रे विसूत्रिते तस्मिन् भिन्ने कुम्भेऽथवा यदि।**
**आदिशेन्निधनं तस्मिन् दम्पत्योः क्रमशस्तदा।।७३।।**
**चतुष्कोणोद्धृतं सूत्रं पश्चात्फलं निरीक्षयेत्।**
**समे शुभं फलं प्रोक्तमधिकेऽशुभप्रदम्।।७४।।**
**अग्न्याधिके भवेद्रोगं नैऋत्ये भयदायकम्।**
**वायव्ये क्षयहेतुश्च ईशाने निर्जनं भवेत्।।७५।।**

सूत्र प्रसारण के समय यदि पूजनीय घट फूट जाय, तो क्रमशः दम्पति के मृत्यु की सूचना है। चारों कोणों में सूत्र को कील में स्थिर करने पर यदि सूत्र भूमि के बराबर है, तो शुभ, यदि अग्निकोण में अधिक है तो रोगभय, नैऋत्य में भय, वायव्य में हानि, ईशान में उच्चाटन की सूचना है ॥७३-७५॥

**।। इति शकुनैर्भूमिपरीक्षणं नाम पञ्चमं सोपानम् ।।**



## अथ प्रश्नवशाच्छुभाशुभज्ञानं नाम षष्ठं सोपानम्

यथा प्रश्नः—

**ग्रामस्वरं तत्र दिशाप्रमाणं नामाक्षरं तत्र ग्रहैः समन्वितम्।**
**शैल्येन गुण्यं युगभागदेयं सौख्यं च सुप्तं च मृतं च शून्यम्॥१॥**

ग्राम व दिशा की स्वर-संख्या में प्रश्नकर्ता के नामाक्षरों का योग कर ७ से गुणे व ४ से भाग दें, शेष से फल का विचार करें, फल में १ शेष हो तो भूमि उत्तम है, २ में सुप्त, ३ में मृत व चार में शून्य भूमि का प्रभाव होता है ॥१॥

अन्यच्च रुद्रयामले—

**नाम ग्रामदिशा चैव स्वरयुक्ता त्रिभिर्भजेत्।**
**एके जीवे द्वये मृत्युः शून्ये शून्यं प्रकीर्तितम्॥२॥**

नाम-ग्राम-दिशा व प्रश्नस्वर के वर्ग की स्वर-संख्याओं के योग में तीन का भाग दें, शेष १ में जीवित, २ में मृत, ३ शेष में शून्य फल है। अर्थात् १ शेष होने पर ही वासयोग्य ग्राम या भूमि है ॥२॥

पुनः भूजीवितादिज्ञानम्—

**व्यासविस्तारयोरैक्यं ग्रामाक्षरसमन्वितम्।**
**चतुर्गुणं नामयुक्तं शिवनेत्रेण भाजितम्॥३॥**

दीर्घ-विस्तार के योग में ग्रामाक्षर (ग्राम के नाम का अक्षर) जोड़कर चार से गुणें व गुणनफल में कर्ता के नाम का अक्षर जोड़कर तीन का भाग देने पर शेष १ में जीवित, २ में सम, ३ में मृत भूमि है। यह रुद्रयामल के अनुसार है ॥३॥

अन्यच्चापि आदियामले—

**भूम्यक्षरं चतुर्गुण्यं तिथिवारं च मिश्रितम्।**
**त्रिभिर्भागः प्रदातव्यः शेषेण फलमादिशेत्॥४॥**

भूमि के (यदि भूमि का कोई नाम हो अन्यथा) प्रश्न की अक्षर-संख्या को ४ से गुणे, उसमें तिथि व दिन की संख्या जोड़कर तीन से भाग दे, शेष में फल जाने— १ में जीवित, २ में सम, ३ शेष में भूमि मृत है, यह आदियामल का मत है ॥४॥

प्रश्नाक्षरतो भूशल्यज्ञानं ज्योतिर्निबन्धे–

**अ-क-च-ट-त-प-य-शा वर्गादिवर्णतः क्रमात्।**
**शल्यकरा इह नान्ये शल्ये गृहे निवसतां नाशः ।।५।।**

वक्ष्यमाण नियमों के अनुसार शल्यज्ञान प्रश्न में यदि प्रश्न का प्रथम अक्षर अ,क,च,ट,त,प,य,श इनमें से कोई है, तो पूर्वादि क्रम से भूमिगत शल्य है और शल्यवती भू में वास से नाश होता है ।।५।।

प्रश्नानुसारं दिक्षु शल्यं यथाशास्त्रम्–

**पृच्छायां यदि अः प्राच्यां नरशल्यं तदा भवेत्।**
**सार्द्धहस्तप्रमाणेन तच्च मानुषमृत्युकृत् ।।६।।**
**आग्नेय्यां यदि कः प्रश्ने शशशल्यं करद्वये।**
**राजदण्डो भवेत्तत्र भयं नैव निवर्तयेत् ।।७।।**
**याम्यायां दिशि चः प्रश्ने कुर्यादाकटिसंस्थितम्।**
**नरशल्यं गृहेशस्य मरणं चिररोगतः ।।८।।**
**नैऋत्यां दिशि टः प्रश्ने सार्द्धहस्तादधस्थले।**
**शुनोऽस्थि जायते तत्र बालानां जनयेन्मृतिम् ।।९।।**
**तः प्रश्ने पश्चिमायां तु शिशोः शल्यं प्रजायते।**
**सार्द्धहस्तमितं तत्र स्वामिनं नेच्छति ध्रुवम् ।।१०।।**
**वायव्यां दिशि यः प्रश्ने तुषाङ्गाराश्चतुष्करे।**
**कुर्वन्ति मित्रनाशन्तु दुःस्वप्नदर्शनं तथा ।।११।।**
**उदीच्यां दिशि पः प्रश्ने तदा शल्यं करैरधः।**
**तद्गृहं निर्धनापत्यं कुबेरसदृशं यदि ।।१२।।**
**ऐशान्यां दिशि शः प्रश्ने गोशल्यं सार्द्धहस्ततः।**
**तद्गोधनानां नाशाय जायते गृहमेधिनाम् ।।१३।।**
**हपया मध्यमे कोष्ठे वक्षोमात्रे भवेदधः।**
**नृकपालमथो भस्मलोहं तत्कुलनाशनम् ।।१४।।**

प्रश्नविधिः–

**स्मृत्वेष्टदेवतां प्रश्नवचनस्याद्यमक्षरम्।**
**गृहीत्वा तु ततः शल्याशल्यं सम्यग्विचारयेत् ।।१५।।**

प्रश्न भूमि पर जाकर स्वेष्टदेव व गणपत्यादि दिक्पालों का सम्यक् पूजन करके वक्ष्यमाणानुसार ब्राह्मण-पुष्प,क्षत्रिय-नदी,वैश्य-फल व शूद्र देवता का

नामोच्चारण करे, इस प्रकार प्रश्न के प्रथम अक्षर अकारादि यथोद्दिष्ट वर्णाक्षरों के आने पर शल्य है, ऐसा निर्देश करना चाहिये ।

**क्रम–** प्रश्न का प्रथमाक्षर यदि अ या आ है, तो अभीष्ट भूमि के पूर्व भाग में डेढ़ हाथ के नीचे मनुष्य की हड्डी है, इसमें निवास से मनुष्य की मृत्यु होती है एवं "क" प्रथमाक्षर से अग्निकोण में शश (खरहा) की हड्डी दो हाथ नीचे है, इसमें राजदण्ड व निरन्तर भय बना रहता है। यदि प्रथमाक्षर "च" है तो कटिमात्र नीचे दक्षिण भाग में नरशल्य है, इसमें गृहेश की मृत्यु होती है। "ट" प्रश्न में नैर्ऋत्य कोण में डेढ़ हाथ नीचे श्वान की हड्डी है, इसमें बालकों की मृत्यु होती है। "त" से पश्चिम भाग में शिशु शल्य डेढ़ हाथ के नीचे है, इसमें कर्ता का उच्चाटन होता है। "प" में वायव्यकोण में तुष-कोयला-भस्म चार हाथ नीचे है, इसमें मित्रद्रोह व दुःस्वप्न दिखाई देता है। यदि प्रश्नाद्यक्षर "य" है तो भूभाग के उत्तर भाग में शल्य है, इसमें धन व अपत्य की न्यूनता (अभाव) रहती है, यदि वास करने वाला कुबेर के समान धनी व पुरुषार्थी हो तो भी धनाभाव का अनुभव करेगा। "श[1]" में ईशानकोण में डेढ़ हाथ नीचे गोशल्य है,इसमें गोधन का नाश होता है।

ह प य इन तीन अक्षरों के प्रश्न में पूर्व-प्रतिपादित दिशाओं के अतिरिक्त भू के मध्यभाग में भी वक्षस्थल मात्र नीचे नृकपाल, राख (भस्म), लोहा है, इसमें कुल का विनाश (निर्वंश) हो जाता है ॥६-१५॥

एतदेव ग्रन्थान्तरेऽपि–

**गृहस्य पिण्डिका चैव कृत्वा च नवखण्डकम् ।**
**तेषु तेषु च भागेषु पूर्वादिक्रमतो बुधैः ॥१६॥**
**व, क, च, ण, ह, स, य, ज, एतान्यक्षराणि वै ।**
**पूर्वादिनवकोष्ठेषु विलिख्य[2] शल्यं विचारयेत् ॥१७॥**

प्रश्नविधिश्च तत्रैव–

**ब्राह्मणश्च वदेत्पुष्पं नदीनाम च क्षत्रियः ।**
**वैश्यश्च नाम देवस्य शूद्रश्चैव फलं वदेत् ॥१८॥**
**प्रश्नस्य प्रथमं वर्णं यत्र पुष्पादिकं भवेत् ।**
**तत्र शल्यं विजानीयाद्भिन्नाक्षरे न तद्भवेत् ॥१९॥**
**प्रश्नस्य समये राजन् भूमौ हस्तं निधाय वै ।**
**रक्षामन्त्रं पठेत् तत्र वारत्रयं विशेषतः ॥२०॥**

१. श या स में अन्तर नहीं है। २. विलिख्य तद्विचारयेत् इति पाठः साधुरिति ।

रक्षामन्त्रो यथा तत्रैव–

ॐ धरणी विदारणी भूत्यै स्वाहा।।इति।।

इमं मन्त्रं ग्रहणादिषु विशिष्टपर्वसु च अक्षरसमसहस्रसंख्याजपं कृत्वा प्रयोगोऽस्य साधु भवति।

प्रश्नक्रमश्च–

(ग)प्रश्ने तु पूर्वस्यां मानुषं शल्यमादिशेत्।
सार्द्धहस्तप्रमाणेन मरणं मनुजस्य च।।२१।।
(क)प्रश्ने चाग्निकोणे तु खरशल्यं कटिमानतः।
राजदण्डो भवेत्तत्र पशूनां मरणं तथा।।२२।।
(च)प्रश्ने दक्षिणस्यां वै कपिशल्यं कटिदेशतः।
मरणं गृहनाथस्य निश्चितं गर्गभाषितम्।२३।।
(त)प्रश्नेऽसुरदिग्भागेऽश्वशल्यं सार्द्धहस्तके।
वित्तराज्यहरं मृत्युर्जायते नात्र संशयः।।२४।।
(ण)प्रश्ने पश्चिमायान्तु शिशुशल्यं सार्द्धहस्तके।
मरणं तत्र निर्देश्यं यथा गर्गवचोदितम्।।२५।।
वायव्यां दिशि (ण)प्रश्ने शल्यं स्यात्पुरुषस्य च।
मरणं कुलनाशश्च जायते नात्र संशयः।।२६।।
कौवेर्यां यदि (ह)प्रश्नो द्विजशल्यं कटिमात्रतः।
निर्धनं जायते तत्र पुत्रहानिश्च सम्भवेत्।।२७।।
(स)प्रश्ने शम्भुकोणे तु ऋक्षशल्यं सार्द्धहस्तकम्।
गोधनस्य नाशः स्याज्ज्ञेयं शल्यविशारदैः।।२८।।
य, ज-प्रश्नाक्षरे जाते कपालाङ्गारलोहकम्।
वास्तुमध्ये समाख्यातं कुलनाशकरं भवेत्।।२९।।
तच्छल्यरहितं गेहं सर्वदा शान्तिकारकम्।

पूर्वोक्तत्वादिमे (ग)तः, य-पर्यन्तश्लोकाः सुस्पष्टास्तथाऽनुभवगम्याः, क्वचिदुपलब्धत्वाच्च लेखकाध्यापकादिदोषोऽपि सम्भाव्य इति विचारणीयम्।

अथात्र ज्योतिर्निबन्धे प्रश्नाक्षरवर्णाः–

*क्रमेण अ, क, च, ट, त, प, य, श तथा ह, प, य, एते वर्णा क्रमेण पूर्वाष्टदिक्षु मध्ये च निवेशिताः सन्ति। इदं यथोक्तपूर्वपृष्ठ (४८) प्रश्नाक्षर-क, ख-मध्यवर्तिसमा एवं केवलम् अष्टाक्षरे स स्थाने ह इति निश्चितमिति,*

*तेनानुभवगम्यफलमेव लोके फलति । तदर्थमनुभवादिदं मे ज्ञायते यत् (स) एव प्रमाणं फलितं चेति सिद्धं पूर्वोक्तत्वादस्य फलादिविवरणं नोच्यते ।*

मध्यकोष्ठविषये तु–

**हपया मध्यकोष्ठे च वक्षोऽधः सम्प्रवतति ।**
**नृकपालं कचो यस्य लोहं तत्कुलनाशनम् ।।३०।।**

इति ज्योतिर्निबन्धे प्रोक्तम् ।

अत्रैव नारायणश्च–

**सद्मप्रश्नकृतो मुखात्प्रथमतो वर्णादि–वर्णोद्गमः ।**
**चेत्तद्दिग्गतमादिशेत्तु हपये शल्यं सुधी मध्यतः ।।३१।।**

इदमपि प्रथमप्रकारोक्तवदेव ज्योतिर्निबन्धोक्तसममेवाऽनेन प्रथमप्रकारस्य दार्ढ्यं सिद्ध्यति ।

अतिप्राचीनपाण्डुलिपितो यस्मिन् छिन्नपत्राणि सन्ति, तत्र- यथा–

**स्मृत्वेष्टदेवतां स्वीयां प्रश्नं कुर्याद्विचक्षणः ।।**

प्रश्नाक्षरेषु पूर्वोक्तेषु वर्णेषु कोऽपि वर्णश्चेत्तदा शल्यं स्यादन्यथा नेति । अक्षराणि अ,व,क,च,ट,त,ह,स,य,ज एतानि सन्ति । प्रकारस्तु पूर्ववदेव । एतेन नवकोष्ठेषु पूर्वादिमध्यमेषु क्रमेण वर्णाक्षरवशेन शल्यं निर्देष्टव्यम्, हस्तादिप्रमाणन्तु पूर्ववदत्रापि जानीयात् ।

प्रश्नविधिश्च–

**''ॐ धरणी विदारणी भूत्यै स्वाहा''** इति सिद्धीकृतेनानेन नवकोष्ठेषु अक्षतं पुष्पं वाऽभिमन्त्र्य रक्षार्थं धृत्वा प्रश्नं कारयेदिति । प्रश्नेनागतस्य शल्यस्य निःसारणार्थं पूर्वं **''ॐह्रीं अमुकमानय वासय स्वाहा'** इति मन्त्रं शतमष्टोत्तरशतं वा पठित्वा भूमिं खनेदिति । तत्र शल्यस्थखातस्थितां सर्वां मृत्तिकां निःसार्य शुचि-मन्त्रैः सिञ्चनादिक्रियानन्तरमेव वासार्थं शेषकर्म कर्तव्यमिति सम्प्रदायसिद्धम् ।

भूमौ स्थापनीयं नवकोष्ठचक्रम्–

| ईशान | पूर्व | अग्नि |
|---|---|---|
| स | अ | क |
| य | ह.प.य | च |
| प | त | ट |
| वायव्य | पश्चिम | नैऋत्य |

(उत्तर — बाएँ; दक्षिण — दाएँ)

इस कथन में भी वैशाख-श्रावण-मार्गशीर्ष व फाल्गुन मास प्रशस्त माने गये हैं, कहीं-कहीं पौष को भी शुभ माना गया है ॥७॥

नारदोऽपि–

**[१]सौम्य–फाल्गुन–वैशाख–माघ–श्रावण–कार्तिकाः ।**
**मासाः स्युर्गृहनिर्माणे पुत्रारोग्यफलप्रदाः ॥८॥**

श्रीनारद के मत में मार्गशीर्ष-फाल्गुन-वैशाख-श्रावण-कार्तिक व माघ ये मास गृहारम्भ में शुभप्रद हैं ॥८॥

वशिष्ठस्तु संक्रान्तिपरत्वेन–

**मासे तपस्ये तपसि माधवे नभसि त्विषे ।**
**ऊर्जे च गृहनिर्माणे पुत्रपौत्र–धनप्रदः ॥९॥**

सौरमास के अनुसार वशिष्ठ मुनि के मत में माघ-फाल्गुन-वैशाख-श्रावण-आश्विन व कार्तिक मास गृहारम्भ में पुत्र-पौत्र व धनकारक हैं ॥९॥

अन्ये तु–

**वैशाखे श्रावणे मार्गे फाल्गुने च विशेषतः ।**
**पत्नीपुत्रार्थलाभः स्याद् गृहकर्तुर्न संशयः ॥१०॥**

मासों के नाम प्रसिद्ध हैं, तब भी चान्द्रमास से वैशाख-श्रावण-मार्गशीर्ष व फाल्गुनमास गृहारम्भ में पत्नी, पुत्र व अर्थकारक हैं । ये मास वाद-विवादरहित सर्वसम्मत होने से इन्हें ही व्यवहार में लेवें ॥१०॥

**एषु चान्द्रमासेष्वपि कन्यायुग्मधनुर्मीनभिन्नसूर्ये गृहं शुभं स्यात् ॥**

कन्या-मिथुन-धनु व मीन के सूर्य में चान्द्रमास से प्रशस्त होने पर भी गृहारम्भ निषिद्ध है ।

सौरमासे नारदः–

**गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत् ।**
**वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं ध्रुवम् ॥११॥**
**कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्धनम् ।**
**कार्मुके च महाहानिर्मकरे च धनागमः ॥**
**कुम्भे तु रत्नलाभः स्यान्मीने सद्मभयावहम् ॥१२॥**

सौरमासों में मेष-वृष-कर्क-सिंह-मकर व कुम्भ राशिस्थ सूर्य शुभ है। शेष निषिद्ध हैं ॥११-१२॥

---

१. मार्गशीर्षः ।

**विशेष–** वृषस्थ सूर्य वैशाख, सिंहस्थ सूर्य श्रावण, मकरस्थ सूर्य फाल्गुन मास के लिये प्रशस्त है ।

श्रीपतिः–

**मीनचापमिथुनाङ्गते कारयेन्न गृहमेव भास्करे ।।१३।।**

वास्तुमण्डने–

**जीर्णोद्धारे जलाग्न्यादिभयतः पतनं गृहम् ।**
**श्रावणोर्जे तथा माघे कारयेत्सुखदं गृहम् ।।१४।।**
**देवालयं तडागं च वाटिकोद्धरणं गृहम् ।**
**गृहमासोदितं शस्तं माघेऽपि मुनिसम्मतम् ।।१५।।**

जल, अग्नि से नष्ट गृह या जीर्णगृह को नवीन बनाने में श्रावण-कार्तिक-माघ भी प्रशस्त हैं। देवगृह, तड़ाग, वाटिका का जीर्णोद्धार तथा जीर्णगृह का उद्धार संस्कार (निर्माण) गृहारम्भ में प्रशस्त मासों व माघ में भी किया जाता है, यह मुनिसम्मत है ।।१३-१५।।

**तृणदारुगृहारम्भे मासदोषो न विद्यते ।**
**पाषाणेष्टिगृहादीनि निन्द्यमासे न कारयेत् ।।१६।।**

तृण-लकड़ी के गृहनिर्माण में मास दोष नहीं है और पाषाण व इष्टिका, मिट्टी की दीवार वाले गृहों में निन्दित मासों का निषेध है-अर्थात् ग्राह्य मास प्रशस्त हैं ।।१६।।

अत्र निष्कर्षः– यत्र सौरचान्द्रयोरसामञ्जस्यं वा मासेषु मतभेदो जायते, तत्र सर्वत्र निर्वादसिद्धमासोऽथवा मुहूर्तो ग्राह्यो यथा वैशाख-श्रावण-मार्गशीर्ष-फाल्गुन-चान्द्रमासास्तथा फाल्गुने मकरसंक्रान्तौ वैशाखे वृषसंक्रान्तौ श्रावणे च सिंहसंक्रान्तौ तेषु क्रमेण कुम्भ-मेष-कर्क-संक्रान्तिषु तथा मार्गशीर्षे वृश्चिके सूर्यस्तु शुभ एव गृहारम्भः सर्वसम्मतोऽयं सिद्धान्त इति ।

वास्तुशास्त्रे–

**शस्तं पशुगृहं ज्येष्ठे आश्विने धान्यनीडनम् ।**
**पानीयं शालिकागेहं चैत्रे धारागृहं शुभम् ।।१७।।**

पशुओं के गृह का निर्माण ज्येष्ठ मास में, धान्य-संग्रह गृह आश्विन में, शाली शरद धान्य पानी धारा (फुहारा) के गृह (यन्त्र) का निर्माण चैत्र में शुभ होता है ।।१७।।

व्यवहारोच्चये–

**शुक्लपक्षे भवेत्सौख्यं कृष्णे तस्करतो भयम्।।**

वसिष्ठः–

**गीर्वाणपूर्वगीर्वाणमन्त्रिणो दृश्यमानयोः।**
**शुक्लपक्षे दिवा कार्यं न निर्माणं च रात्रिषु।।१८।।**

गुरु व शुक्र उदय हो तो शुक्लपक्ष के गृहारम्भ में सब प्रकार के सुख की प्राप्ति होती है । कृष्णपक्ष में निर्माण से तस्करभय होता है। दिन में गृहारम्भ शुभ व रात्रि में निषिद्ध है ॥१८॥

तिथिः–

**दारिद्र्यं प्रतिपत्कुर्याच्चतुर्थी धनहारिणी।**
**अष्टम्युच्चाटनं चैव नवमी शस्त्रघातिनी।।१९।।**
**अमायां राजभीतिश्च चतुर्दश्यां स्त्रियः क्षयम्।**

अपि च–

**रिक्ताष्टमीदर्शरवीन्दुभौमा विवर्जनीया विबुधाः प्रयत्नतः।।२०।।**

**गृहारम्भ में तिथियों का फल–** प्रतिपदा में गृहारम्भ से दरिद्रता, चतुर्थी में धनहानि, अष्टमी में उच्चाटन, नवमी में शस्त्राघात, चतुर्दशी में स्त्रीहानि व अमा में राजभय होता है । समान रूप में रिक्ताष्टमी-अमा-सूर्य-क्षीण चन्द्र व भौम का दिन गृहारम्भ में निषिद्ध है ॥१९-२०॥

गृहारम्भे नक्षत्रशुद्धिर्मुहूर्तचिन्तामणौ वसिष्ठः–

**गृहेशतत्स्त्री-सुखवित्तनाशोऽर्केन्द्वीज्यशुक्रे विबलेऽस्तनीचे।**
**कर्तुः स्थितिर्नो विधुवास्तुनोर्भे पुरःस्थिते पृष्ठगते खनिः स्यात्।।२१।।**

गृह में रवि गृहस्वामी का कारक होता है। चन्द्रमा पत्नी, गुरु सुख व धन का कारक शुक्र होता है। ये कारक ग्रहगोचर व जन्मदशा से निर्बल, अस्त, बाल, वृद्ध व नीचराशि के हों, तो अपने-अपने कारकों की हानि करते हैं । गृहपिण्ड व गृहारम्भ नक्षत्र मुख्यद्वार के सम्मुख हो तो कर्ता का उद्वास व पीछे होने पर चोरी होती है ॥२१॥

अस्मिन्नेवार्थे श्रीपतिः–

**रवौ गृहेशो गृहिणी शशाङ्को धनं सितो देवगुरुश्च सौख्यम् ।**
**विनाशमायाति बलेन हीनो नीचस्थिते वास्तसमागते च ।।२२।।**

२१ श्लोकानुरूप होने से स्पष्टार्थ है ॥२२॥

वसिष्ठोऽपि–

**नीचे शत्रुगते शुक्रे गुरौ वा यदि वा बुधे ।**
**शशाङ्के वा कृतं गेहमतिनिःस्वत्वमाप्नुयात् ।।२३।।**

चन्द्र-बुध-गुरु व शुक्र नीचराशि वा शत्रुराशि या निर्बल निस्तेज हों, तो आरम्भ गृह अतिनिःस्वत्व (निर्धन) हो जाता है ॥२३॥

वास्तुशास्त्रे च–

**अस्तदोषो न सङ्ग्राह्यः प्रतिदैवात्मके बुधैः ।**
**नास्तदोषः सदा चन्द्रे न मैत्रेऽब्जस्य च नीचता ।।२४।।**

प्रतिदिन सूर्य के अस्त व चन्द्रमा के प्रतिमासिक अमा का अस्तदोष (गुरु-शुक्र) की भाँति दिन संख्यात्मक नहीं होता है । यह घट्यात्मक अस्तदोष सन्ध्याजनित व चन्द्रास्तदोष क्षीणचन्द्रजनित है व अनुराधा में नीचत्व दोष चन्द्रमा का नहीं होता है ॥२४॥

वास्तुशास्त्रे–

**ऋक्षं चन्द्रस्य वास्तोश्च त्वग्रे पृष्ठे न शस्यते ।**

श्रीपतिश्च–

**क्षपाकरे नैव गृहं पुरःस्थे कुर्याद्वसेन्नैव च तत्र कर्ता ।**
**पतन्ति स्वप्नानि च पृष्ठसंस्थे यत्नेन तस्मादिदमत्र चिन्त्यम् ।।२५।।**

चन्द्र व वास्तु के नक्षत्रों के मुख्यद्वार के सम्मुख होने पर उद्वास व पृष्ठस्थ होने पर चौरभय व अनेक दुःस्वप्न होता रहता है ॥२५॥

**विशेष–** दिग्द्वार-नक्षत्रों में गृहारम्भ व पिण्ड का निर्माण नहीं करना चाहिए ।

द्विग्द्वारनक्षत्राणि रामदैवज्ञः—

**भानि स्थाप्यान्यब्धिदिक्षु सप्तसप्तानलर्क्षतः ।।२६।।**

कृत्तिका से सात-सात नक्षत्रों को क्रम से पूर्वादि चारों दिशाओं में देना चाहिए । निम्न चक्र से देखें—

कृ.रो.मृ.आ.पुन.पुष्प.श्लेषा

भ.अ.रे.
उ.भा.
पू.भा.
शत.
धनि.




म.
पू.फा.
उ.फा.
हस्त
चित्रा
स्वा. विशा.

अनु.ज्ये.मू.पू.षा.उ.षा.अभि.श्र.

नारायणभट्टस्तु—

**गेहं माधवपौषफाल्गुन-नभो मार्गेषु मृद्वानिलैः**
**पाश्यर्केज्यवसुध्रुवैः स्थिरतनौ कुर्यात्सुकेन्द्राष्टमे ।**
**नो पृष्टाग्रविधौ न रिक्तकतिथौ नार्कारवारांशयो-**
**रुक्तर्क्षेष्वपि कुम्भमीनगविधौ स्तम्भोच्छ्रयं नाचरेत् ।।२७।।**

वैशाख-पौष-फाल्गुन-श्रावण व मार्गशीर्ष मास,मृगशिरा-रेवती-चित्रा-अनुराधा-स्वाती-शतभिषा-हस्त-पुष्य-धनिष्ठा-तीनों उत्तरा-रोहिणी नक्षत्र, स्थिर-लग्न, केन्द्र में शुभग्रह व अष्टम शुद्ध ऐसी ग्रहों की स्थिति, गृहारम्भ में शुभ है। और मुख्यद्वार के पीछे व सम्मुख नक्षत्रों रिक्ता-अष्टमी-अमा व मंगल व सूर्य का दिन अंश गृहारम्भ में सर्वथा त्याग दिया जाय। गृहारम्भ में प्रयुक्त नक्षत्रों में भी कुम्भ व मीन के चन्द्र में स्तम्भ या किसी प्रकार का काष्ठ तृण संग्रह, चारपाई सम्बन्धी कार्य, दक्षिण दिशा की यात्रा, शवदाह नहीं करना चाहिए। यहाँ इस अंश को अनुक्त होने पर भी आवश्यकतावश उद्धृत किया गया है ।।२७।।

आरम्भनक्षत्रविषये वास्तुप्रदीपे यथा–

**चित्रानुराधामृगरेवतीषु स्वाती च तिष्ये च तथोत्तरासु।**
**बाह्रे धनिष्ठा शततारकासु गेहादिकारम्भणमामनन्ति।।२८।।**

ऋक्षोच्चये–

**चित्रा शतभिषा स्वाती हस्तः पुष्यः पुनर्वसुः।**
**रेवतीरोहिणीमूलाः श्रवणोत्तरफाल्गुनी।।२९।।**
**धनिष्ठा चोत्तराषाढा तथा भाद्रोत्तरान्विता।**
**अश्विनीमृगशीर्षे च अनुराधा तथैव च।।३०।।**
**वास्तुपूजनमेतेषु नक्षत्रेषु करोति यः।**
**समाप्नोति नरो लक्ष्मीमिति प्राह पराशरः।।३१।।**

नक्षत्रों के नाम प्रसिद्ध हैं, इनमें वास्तुपूजन से सर्वदा लक्ष्मी गृह में निवास करती हैं, यही उपर्युक्त नक्षत्रों का अभिप्राय है ॥२९-३१॥

अत्रैव गर्गश्च–

**त्र्युत्तरेऽपि च रोहिण्यां पुष्ये मैत्रे करद्वये।**
**धनिष्ठाद्वितये पौष्ये गृहारम्भं प्रशस्यते।।३२।।**

वाराहीसंहितायाम्–

**हस्तादित्य-शशाङ्क-पुष्य-पवन-प्राजेशमित्रोत्त-**
**चित्राश्विश्रवणेषु वृश्चिकघटौ त्यक्त्वा विरिक्ते तिथौ।**
**शुक्राचार्यशनैश्चरज्ञशशिनो वारेऽनुकूले विधौ**
**सद्भिर्वेश्मनि सूतिकागृहविधिः क्षेमाकरं कीर्तितः।।३३।।**

[1]तीनों उत्तरा-रोहिणी-पुष्य-अनुराधा-हस्त-चित्रा-धनिष्ठा-शतभिष-रेवती ये नक्षत्र गृहारम्भ में प्रशस्त हैं[2]। हस्त[3]-पुनर्वसु-मृगशिरा-पुष्य-स्वाती-शतभिषा-अनुराधा-तीनों उत्तरा-चित्रा-अश्विनी-श्रवण[4] नक्षत्रों में वृश्चिक व कुम्भ लग्न, रिक्ता को छोड़ शुभतिथि, स्थिर व द्विस्वभाव लग्न में सोम-बुध-गुरु-शुक्र व शनि का दिन अनुकूल व चन्द्रदिन गृहारम्भ व सूतिका-गृहनिर्माण में महापुरुषों ने मंगलमय माना है ॥३२-३३॥

---

१ से २ गर्ग के मत का उद्धरण व ३ से ४ तक वाराहमिहिर के अनुसार है। इसमें शंका नहीं करनी चाहिये।

**वास्तोः कर्मणि धिष्णवारतिथयोऽश्विन्युत्तरा रेवती-**
**हस्तादित्रय-मैत्र-तोय-वसुभे पुष्ये मृगे रोहिणी ।।**
**निन्द्यौ भूसुतभास्करौ च शुभदा पूर्णा च नन्दातिथि-**
**र्नेष्टा वैधृति-गण्डशूलपरिघ-व्याघातवज्रावपि ।।३४।।**
**विष्कुम्भो व्यतिपातकौ न शुभदौ योगाः परे शोभनाः**
**शस्तं नागववाख्यतैतिलगरं युग्मां तिथिं वर्जयेत् ।।**
**मौहूर्तं त्वथ विश्वमष्टनवमं पञ्चत्रिरागा द्विकं**
**श्रेष्ठञ्च द्वितयं तुलावृषघटौ कुम्भं धनुःकन्यके ।**
**द्व्यङ्गे वास्थिरभे च सौम्यसहिते लग्ने शुभे वीक्षिते**
**सौम्यैर्वीर्यसमन्वितैश्च दशमे निर्माणमाहुर्बुधाः ।।३५।।**

वास्तु कर्म में अश्विनी-तीनों उत्तरा-रेवती-हस्त-चित्रा-स्वाती-अनुराधा-पूर्वाषाढ़-धनिष्ठा-पुष्य-मृगशिरा-रोहिणी ये नक्षत्र शुभ हैं । मंगल, रवि का दिन अशुभ, पूर्णा, नन्दा तिथि ( ५।१०।१५।१।६।११ ) शुभ, वैधृति-शूल-गण्ड-परिघ-व्याघात-वज्र-विष्कुम्भ-व्यतिपात ये योग अशुभ हैं, शेष योग शुभ, नाग-वव-तैतिल व गर ये करण शुभ, समतिथि त्याज्य है। १३।८।९।५।३।७।२ ये रौद्र मुहूर्त्त शुभ हैं। तुला-वृष-कुम्भ-मिथुन-कन्या-धनु लग्न व सामान्य रूप में स्थिर या द्विस्वभाव लग्न, शुभग्रहयुक्त व दृष्ट हों, अथवा बलवान् शुभग्रह दशवें हो, तो गृहनिर्माण कार्य शुभ माना गया है ।।३४-३५।।

मत्स्यपुराणे च–

**वज्रव्याघातशूलेषु व्यतिपाताऽतिगण्डयोः ।**
**विष्कुम्भगण्डपरिघान् वज्रयोगान् त्यजेद् बुधः ।।३६।।**

मत्स्यपुराण के अनुसार वज्र-व्याघात-शूल-व्यतिपात-अतिगण्ड-विष्कुम्भ-गण्ड व परिघ ये आठ योगों को छोड़कर शेष योग शुभ हैं । यद्यपि योगों की चर्चा पूर्व में भी की गयी है; किन्तु पूर्व में पिण्ड सम्बन्धी व यहाँ मुहूर्त-विषयक होने से पुनरुक्ति दोष नहीं है ।।३६।।

शिवोक्तमुहूर्तेषु संग्रहशिरोमणौ–

**श्वेते मैत्रे च माहेन्द्रे गन्धर्वभगरोहिणी ।**
**तथा वैरो च सावित्रमुहूर्ते गृहमारभेत ।।३७।।**

श्वेत-मैत्र-माहेन्द्र-गन्धर्व-भग-रोहिणी-वैरोचन-सावित्र ये मुहूर्त गृहारम्भ में शुभ हैं ॥३७॥

*(संग्रहशिरोमणि प्रभा २३, श्लोक १० देखें। प्रकाशित सम्पूर्णानन्द सं.वि.वि., वाराणसी)*

श्रीपतिः –

**द्व्यङ्गे स्थिरे वा भवने विलग्ने सौम्यग्रहैर्युक्तनिरीक्षिते वा ।**
**कर्मस्थितैर्वीर्ययुतैश्च सौम्यैर्निर्माणमाहुर्भवनस्य सन्तः ।।३८।।**
**पापैस्त्रिषष्ठायगतैस्त्रिकोणकेन्द्राश्रितैः साधुभिरालयस्य ।**
**वदन्ति निर्माणमिहाष्टमस्थः क्रूरश्चतुर्थे मरणं करोति ।।३९।।**

श्रीपति के अनुसार द्विस्वभाव स्थिर लग्न में शुभग्रह हों या देखते हों और दशम स्थान में बली शुभग्रह हों, तो गृह का निर्माण करना चाहिए, यह सन्तों का मत है। पापग्रह त्रिषडाय ३।६।११ व त्रिकोण, केन्द्र में शुभग्रहों के होने पर गृहारम्भ शुभ है; किन्तु चतुर्थ व अष्टमस्थ क्रूरग्रह में निर्माण से मृत्यु का भय है ॥३८-३९॥

रामश्च–

**भौमार्करिक्तामाद्यूने चरोनाङ्गे विपञ्चके ।**
**व्यष्टान्त्यस्थैः शुभैर्गेहारम्भस्त्र्यायारिगैः खलैः ।।४०।।**

गृहारम्भ में मंगल, सूर्य का दिन, रिक्ता-अमा-चरलग्न पञ्चक (बाण-पञ्चकों में अग्निबाण) ८।१२ में शुभग्रह को छोड़कर व ३।६।११ में पापग्रहों के होने पर गृहारम्भ करना चाहिए ॥४०॥

वास्तुप्रदीपे–

**नष्टेन्दुरिक्ताकुजसूर्यवर्ज्ये चरोनगे सिंहविहीनलग्ने ।**
**पापैस्त्रिषष्ठायगतैः शुभैश्च व्यष्टान्त्यगै[1] गृहविधिःप्रशस्तः ।।४१।।**

अमा-रिक्तातिथि-रवि-मंगल का दिन चर व सिंह लग्न छोड़कर ३।६।११ स्थानों में पापग्रह व ८।१२ से रहित शुभग्रहों में गेहारम्भ शुभ होता है ॥४१॥

---

१. वेश्म इति ।

तत्रैव वैशिष्ट्यम्–

**शनौ स्वाती सिंह[1]लग्ने शुक्लपक्षश्च सप्तमी।**
**शुभयोगः श्रावणश्च सकाराः सप्त दुर्लभाः ।।४२।।**

श्रावणमास, शुक्लपक्ष, सप्तमी तिथि, शनि दिन, स्वाती नक्षत्र, शुभयोग व सिंह लग्न ये सात सकार गृहारम्भ में दुर्लभ हैं ।।४२।।

अस्य फलश्रुतिश्च तत्रैव–

**सप्तानां योगतो वास्तु पुत्रवित्तप्रदः सदा।**
**गजश्च धनधान्यानि पुरे तिष्ठन्ति सर्वदा ।।४३।।**

४२ श्लोकोक्त सप्तसकार योग में निर्मित वास्तु से पुत्र-धन की वृद्धि व हाथी-वाहन व सभी प्रकार के सुख, साधनोपयोगी वस्तु व ऐश्वर्य से सर्वदा नगर व गेह परिपूर्ण रहते हैं ।।४३।।

प्रसङ्गाद् गृहारम्भे भूमिशयनविचारो ग्रन्थान्तरे–

**प्रद्योतनात्पञ्चनगाङ्कसूर्यनवेन्दुषड्विंशमितेषु भेषु।**
**शेते मही नैव गृहं विधेयं तडागवापीखननं न शस्तम् ।।४४।।**

सूर्य के नक्षत्र से ५।७।९।१२।१९ व २६ वें नक्षत्रों में भूमि सोती है। इनमें गृहारम्भ, वापी-तड़ाग-कुँआ प्रभृति का खनन निषिद्ध है ।।४४।।

वास्तुभूषणे च–

**स्यान्नाडी शयने शशीमिततिथौ तुर्ये४ तथार्के मिता१२।**
**ऋक्षे२७भूपति१६भिर्नगैः७परिमिते शेषे भवेज्जाग्रतिः ।।४५।।**

सूर्य के नक्षत्र से ५।७।९।१२।१९।२६ वें नक्षत्रों में क्रमशः १।१५।४।१२।२७।७ ये घटी भूमि के शयन की हैं व शेष घटी जागने की हैं ।।४५।।

**शयन-चक्र**

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सूर्य के नक्षत्र से शयन के | ५ | ७ | ९ | १२ | १९ | २६ | नक्षत्रों की संख्या |
| शयन की घटी | १ | १५ | ४ | १२ | २७ | ७ | शेष घटी जागरण की हैं ।।८।। |

१. श्लोक ४१ में सिंहलग्न निषिद्ध व ४२ में प्रशस्त है, यह शंका का विषय नहीं है; क्योंकि ४२ में सात सकार में सिंह विशेषोद्देश्यक है।

गृहारम्भे वत्सचक्रं रामदैवज्ञः—

**गेहाद्यारम्भेऽर्कभाद्वत्सशीर्षे रामैर्दाहो वेदभैरग्रपादे।**
**शून्यं वेदैः पृष्ठपादे स्थिरत्वं रामैः पृष्ठे श्रीर्युगैर्दक्षकुक्षौ।**
**लाभो रामैः पुच्छगैः स्वामिनाशो वेदैर्नैश्व्यं वामकुक्षौ सुखानि।**
**रामैः पीडा सन्ततं चार्कधिष्ण्यादश्वै रुद्रैर्दिग्भिरुक्तं ह्यसत्सत्।।४६।।**

वास्तुसारे वास्तुचक्रम्—

**सूर्यभाद्गणयेद्वास्तुचक्रं च दिनभावधि।**
**अश्व७रुद्र११दशर्क्षं १० चाशुभदं शुभदं क्रमात्।।४७।।**

राजमार्त्तण्डे—

**वृषचक्रं वृषाकारं सर्वाऽवयव—संयुतम्।**
**यस्मिन् ऋक्षे स्थितो भानुस्तदाद्यास्त्रीणि मस्तके।।४८।।**
**अग्रपादे च चत्वारः पुनश्चत्वारि पश्चिमे।**
**पृष्ठे त्रीणि ऋक्षाणि कुक्षौ चत्वारि दक्षिणे।।४९।।**
**पुच्छे त्रीणि च ऋक्षाणि कुक्षौ चत्वारि वामके।**
**मुखे त्रीणि च धिष्ण्यानि अष्टाविंशतितारकाः।।५०।।**

अभिजित् सहित सूर्य के नक्षत्र से ३ नक्षत्र वत्स के शीर्ष में, उसमें आरम्भ से अग्निभय होता है। ४ अग्रपाद में शून्य, ४ पृष्ठ में स्थिरता, ३ पृष्ठ पर श्रीप्राप्ति,४ दक्षकुक्षि में लाभ, ३ पुच्छ में स्वामिनाश, वामपाद में ४ निर्धनता, ३ वामकुक्षि में निरन्तर दुःख होता रहता है। संक्षेप में सूर्य नक्षत्र से ७ अशुभ, ११ शुभ व १० अशुभ है ।।४६-५०।।

फलम्—

**शिरसो वज्रपातः स्यादुद्वेगश्चाग्रपादयोः।**
**स्थिरत्वं पश्चिमे पादे पृष्ठे चैव धनागमः।।५१।।**
**दक्षकुक्षौ जयो लाभः पुच्छे स्वामिविनाशनम्।**
**वामकुक्षौ च दारिद्र्यं मुखे पीडा निरन्तरम्।।५२।।**
**सूर्यभात्तु त्यजेत् सप्त ततश्चैकादशे धनम्।**
**ततोऽन्येषु दुष्टं स्यादिति वास्तुनि कीर्तयेत्।।५३।।**

## अथ वत्स-चक्रम् (सूर्यनक्षत्र से साभिजित्)

| नक्षत्र-संख्या | ३ | ४ | ४ | ३ | ४ | ३ | ४ | ३ |
|---|---|---|---|---|---|---|---|---|
| स्थान | शीर्ष | अग्र-पाद | पृष्ठ-पाद | पृष्ठ | दक्षकुक्षि | पुच्छ | वामपाद | वाम-कुक्षि |
| फल | अशुभ | अशुभ | शुभ | शुभ | शुभ | अशुभ | अशुभ | अशुभ |

वास्तुपुरुषवासस्तत्रैव–

**सवेदास्तिथयो द्विघ्ना नामाक्षर-समन्वितम्।**
**त्रिभिश्चैव हरेद्भागं शेषं पुरुष उच्यते।।५४।।**

तिथि संख्या में ४ जोड़कर २ से गुणे, नामाक्षर जोड़कर ३ के भाग-शेष में वास्तुपुरुष का क्रमशः १ शेष में स्वर्ग, २ में पाताल, ३में मृत्युलोक में वास होता है ।।५१-५४।।

**एके च वसते स्वर्गे द्वाभ्यां पातालमेव च।**
**शून्ये तु मृत्युलोके स्यादिति चिन्त्य गृहमाभेत्।।५५।।**

वास्तुपुरुषस्य वासफलम्–

**स्वर्गे वासे भवेल्लाभः पाताले च श्रियः सदा।**
**मृत्युलोके भवेन्मृत्युरिति चिन्त्य गृहमारभेत्।।५६।।**

उपर्युक्त वत्सचक्र के अवलोकन से अर्थ स्पष्ट हो जायेगा ।।५५-५६।।

**।। इति गृहारम्भमुहूर्तप्रतिपादनं नाम दशमं सोपानम् ।।**



# अथ वास्तुकुण्डलीनामैकादशतमं सोपानम्

रामः–

**लग्नाम्बरायेषु भृगुज्ञभानुभिः केन्द्रे गुरौ वर्षशतायुरालयः।**
**बन्धौ गुरुर्व्योम्नि शशीकुजार्कजौ लाभे तदाशीतिसमायुरालयः ।।१।।**

गृहारम्भ के समय लग्न में शुक्र, दशम में बुध, लाभ में सूर्य व केन्द्र में गुरु हो, तो गृहारम्भ से गृह की आयु १०० वर्ष की होती है। दूसरे योग में ४ भाव में गुरु, १० में चन्द्रमा व लाभ में मंगल-शनि हों, तो ८० वर्ष की आयु होती है ॥१॥

अन्यदपि तत्रैव–

**सोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगतेऽथवा।**
**शनौ स्वोच्चे लाभगे वा लक्ष्म्या युक्तं चिरं गृहम् ।।२।।**

उच्च का शुक्र लग्न में १ योग वा उच्च का गुरु ४ या लग्न में हो, अथवा शनि उच्च का लाभ में हो, तो गृहारम्भ से चिरकालिक लक्ष्मी का निवास उस घर में रहता है ॥२॥

श्रीपतिः–

**स्वोच्चवर्तिनि गते विलग्नगे देवमन्त्रिणि रसातलेऽथवा।**
**स्वोच्चगे रविसुतेऽथवायगे स्यात्स्थितिश्च सुस्थिरं सदा श्रिया ।।३।।**

गुरु उच्च का लग्न में या चतुर्थ में हो या उच्च का शनि लाभ में हो, तो इन तीनों योगों में भी गृहारम्भ से चिरकाल तक लक्ष्मी का वास घर में रहता है ॥३॥

रामः–

**द्यूनाम्बरे यदैकोऽपि परांशस्थो ग्रहो गृहम्।**
**अब्दान्तः परहस्तस्थं कुर्याच्चेद्वर्णपोऽबलः ।।४।।**

गृहारम्भ लग्न से सप्तम या दशम में शत्रु के अंश में रहने वाला एक भी ग्रह व स्वामी के वर्ण का अधिपति निर्बल हो तो प्रारम्भ गृह १ वर्ष के अन्दर परहस्तगत हो जायेगा ॥४॥

वसिष्ठः–

**एको ग्रहश्चेत्परभागवर्ती जायागतो कर्मगतो यतः स्यात्।**
**करोति गेहं परहस्तयातं यदा हि वर्षाद्विबलः [१]सखेटः ।।५।।**

उपर्युक्त श्लोक के अनुकूल होने से स्पष्ट है ॥५॥

श्रीपतिः–

**एकोऽपि नूनं परभागवर्ती वियत्स्मरस्थः खचरोऽथ[२]मध्ये ।**
**करोति गेहं परहस्तयातं स्याद्दुर्बलश्चेदिह वर्णनाथः[३] ।।६।।**

यह भी रामदैवज्ञोक्तवत् प्रसिद्ध व स्पष्ट है ॥६॥

वास्तुरत्नदीपे–

**लग्नेऽर्के वज्रपातः स्यात्कोशहानिश्च शीतगौ।**
**मृत्युर्विश्वम्भरा पुत्रे दारिद्र्यं रविनन्दने।।७।।**

गृहारम्भ में लग्नस्थ सूर्य से वज्रपात, चन्द्र से कोशहानि, मंगल से मृत्यु,शनि से दरिद्रता होती है ॥७॥

**जीवे धर्मादिकामाः स्युः सुतोत्पत्तिश्च भार्गवे।**
**चन्द्रजे कुशला शक्तिर्जनस्यायुः प्रवर्द्धते।।८।।**

लग्न में गुरु धर्मादि कार्य कराते हैं, शुक्र से पुत्रोत्पत्ति, बुध से शक्ति व शनि से उस गृह में उत्पन्न प्राणी दीर्घजीवी होते हैं ॥८॥

**द्वितीयस्थे रवौ हानिश्चन्द्रे शत्रुक्षयो भवेत्।**
**भूसुते बन्धनं प्रोक्तं नानाविघ्नाश्च भानुजे।।९।।**
**बुधे द्रविण–सम्पत्तिर्गुरौ धर्मसमागमः।**
**तथा कामविनोदेन भृगौ कालं व्रजेदिह।।१०।।**

गृहारम्भ लग्न से द्वितीय में सूर्य से हानि, चन्द्र से शत्रुनाश, मंगल से बन्धन,बुध से द्रव्य-लाभ, गुरु से धर्म-वृद्धि, शुक्र से आमोद-प्रमोद, शनि से विघ्नों का बाहुल्य होता है ॥९-१०॥

**सौम्यग्रहास्तृतीयस्थाः पापा अपि विशेषतः।**
**सिद्धिः स्यादचिरादेव यथाभिलषितं प्रति।।११।।**

गृहारम्भ लग्न से तृतीय स्थान में शुभग्रह शीघ्र अभिलाष की पूर्ति करते हैं और वहीं पापग्रह विशेष पूर्ति के साधक होते हैं ॥११॥

---

१. यदा हि वर्षाधिपो निर्बलः स्यात्। २. खचारो यदि स्यादिति पाठः साधुः ।
३. विप्राधीशौ भार्गवेज्यौ कुजार्कौ राजन्यानामोषधीशो विशां च ।
शूद्राणां ज्ञश्चान्त्यजानां शनिः स्यात् ॥ इति वर्णेशा भवन्ति ।

**चतुर्थस्थानगे जीवे पूजा सम्पद्यते नृपात्।**
**चन्द्रजे च सदा लाभो भूमिलाभस्तु भार्गवे।।१२।।**
**वियोगः सुहृदां भानौ मित्रभेदो धरासुते।**
**बुद्धिनाशो निशानाथे महालाभोऽर्कनन्दने।।१३।।**

आरम्भ लग्न से चतुर्थ में गुरु राजपूजा कराते हैं, बुध लाभ, शुक्र भूमिलाभ, सूर्य सुहृद्वियोग, मंगल मित्रवैर, चन्द्रमा बुद्धिनाश, शनि विशेष लाभकारक होते हैं ॥१२-१३॥

**पञ्चमस्थे सुराचार्ये मित्रबन्धुधनागमः।**
**शुक्रे पुत्र—धनप्राप्तिर्हेमाभरणमिन्दुजे।।१४।।**
**सुतदुःखं सदा सूर्ये शशाङ्के कलहागमः।**
**भौमे कामविरोधः स्याच्छनौ कामविमर्दनम्।।१५।।**

आरम्भ लग्न से पञ्चमस्थ गुरु मित्र-बन्धु व धनागम, शुक्र पुत्र-धन-प्राप्ति, बुध सुवर्णाभूषण की प्राप्ति, सूर्य पुत्रपीड़ा, चन्द्रमा विवाद की वृद्धि, मंगल व शनि कार्यनाश करते हैं ॥१४-१५॥

**षष्ठस्थानगते सूर्ये पूजा सम्पद्यते नृपात्।**
**चन्द्रे पुष्टिः कुजे प्राप्तिः शौरे शत्रुबलक्षयः।।१६।।**
**गुरौ चार्थोदयः प्रोक्तो भृगौ विद्यागमो भवेत्।**
**मानज्ञानस्य कौशल्यं नक्षत्रपतिनन्दने।।१७।।**

षष्ठ स्थान में सूर्य राजसम्मान, चन्द्रमा पुष्टि-वृद्धि, कुज लाभ, शनि शत्रुनाश, गुरु अर्थागम, शुक्र विद्यावृद्धि, बुध मान-ज्ञान में कौशल देते हैं ॥१६-१७॥

**लग्नात्सप्तमगे जीवे बुधे दैत्यपुरोहिते।**
**गजवाजिधरित्रीणां क्रमाद्भोगो विनिर्दिशेत्।।१८।।**
**भास्करे कीर्तिभङ्गः स्यात् कुजे विग्रहमादिशेत्।**
**चन्द्रे मन्दे युते मान्द्यं हीनाङ्गत्वं भयं तथा।।१९।।**

लग्न से सप्तमस्थ गुरु-बुध-शुक्र क्रम से हाथी, घोड़ा व भूमि की वृद्धि करते हैं। सूर्य कीर्तिभंग, मंगल विग्रह, चन्द्रमा आलस्य, अंगहीनता व भय का कारक होता है ॥१८-१९॥

**निधनस्थे सहस्रांशौ शत्रुतो विपदः सदा।**
**हानिः शीतमयूखे च मङ्गले रविजे भयम्।।२०।।**

**बुधे मानधनावाप्तिः सुरेज्ये विजयो महान्।**
**शुक्रे स्वजनतो दद्यात्सुखं पुंसां विशेषतः ।।२१।।**

अष्टमस्थ सूर्य शत्रुबाधा, चन्द्रमा हानि, मंगल व शनि भय, बुध धन-सम्मान की प्राप्ति, गुरु मानविजय, शुक्र स्वजनों से सम्मान दिलाते हैं ।।२०-२१।।

**नवमस्थानगे जीवे बुद्धिभाग्यविवर्द्धनम्।**
**बुधे विविधभोगाप्तिः शुक्रे कामोदयो[1] भवेत्।।२२।।**
**चन्द्रे धातुक्षयः प्रोक्तो धर्महानिश्च भास्करे।**
**कुजे सामर्थ्यहानिः स्याद्रविजे कामदूषणम्।।२३।।**

नवम स्थान में जीव बुद्धि व भाग्य की वृद्धि, बुध विविध भोगों की प्राप्ति, शुक्र विलासिता की वृद्धि, चन्द्रमा धातुक्षय, सूर्य धर्महानि, मंगल शक्तिह्रास, शनि दूषण उत्पन्न करते हैं ।।२२-२३।।

**दशमस्थानगे शुक्रे शयनासनसिद्धयः।**
**सुराचार्ये महत्सौख्यं विजयश्च तथा बुधे।।२४।।**
**मार्त्तण्डे धनवृद्धिश्च चन्द्रे कोशविवर्द्धनम्।**
**भौमे बलं सदा पुंसां शनौ कीर्तिविलोपनम्।।२५।।**

दशम स्थान में शुक्र शयन आसनों की सुख-सुविधा, गुरु विशिष्ट सुख, बुध विजय, सूर्य धनवृद्धि, चन्द्रमा कोश की वृद्धि, मंगल पुरुषार्थ की सिद्धि व शनि कीर्ति का नाश करते हैं ।।२४-२५।।

**लाभस्थानगताः सर्वे प्रयच्छन्ति शुभं फलम्।**
**व्यये सर्वे सदौदास्यं प्रदिशन्ति विशेषतः।।२६।।**

गृहारम्भ लग्न से लाभस्थान में सभी शुभ फल व व्यय स्थान में उदासीनता देते हैं ।।२६।।

रामः—

**जीवार्कविच्छुक्रशनैश्चरेषु लग्नारियामित्रसुखत्रिकेषु।**
**स्थितिः शतं स्याच्छरदां सिताकरिज्ये तनुस्त्र्यङ्गसुते शतं द्वे।।२७।।**

गृहारम्भ लग्न से गुरु-सूर्य-बुध-शुक्र व शनि क्रम से लग्न, शत्रु, सप्तम, सुख व तृतीय स्थान में भवन की आयु १०० वर्ष की देते हैं तथा

१. क्रमादयो इति साधु पाठः ।

शुक्र लग्न में, सूर्य तीसरे, मंगल छठवें व गुरु पाँचवें हों, तो २००वर्ष की आयु प्रदान करते हैं ॥२७॥

**लग्नाम्बरायेषु गुरुज्ञभानुभिः केन्द्रे गुरौ वर्षशतायुरालयम् ।**
**बन्धौ गुरुर्व्योम्नि शशीकुजार्कजौ लाभे तदाशीतिसमायुरालयम् ।।२८।।**

लग्न में गुरु,दशम में बुध, लाभ में सूर्य व केन्द्र में शुक्र शतवर्ष व ४ में गुरु, १० में चन्द्र, लाभ में मंगल, शनि ८० वर्ष की आयु प्रदान करते हैं ॥२८॥

अथ नक्षत्रमधिकृत्य वास्तुकुण्डली रामः –

**पुष्यध्रुवेन्दुहरिसर्पजलैःसजीवैस्तद्वासरेण च कृतं सुतराज्यदं स्यात् ।**
**द्वीशाश्वितक्षिवसुपाशिशिवैः सशुक्रैर्वारे सितस्य च कृतं धनधान्यदं स्यात् ।।२९।।**

पुष्य-तीनों उत्तरा-रोहिणी-श्रवण-श्लेषा-पूर्वाषाढ़ नक्षत्रों में कोई नक्षत्र व गुरु भी उसी नक्षत्र में व गुरु का दिन भी हो, तो गृहारम्भ सुत व राज्य देने वाला होता है। विशाखा-अश्विनी-चित्रा-धनिष्ठा-शतभिषा-आर्द्रा नक्षत्रों में कोई नक्षत्र शुक्र से संयुक्त व शुक्र का दिन गृहारम्भ में धनधान्य देने वाला होता है ॥२९॥

वसिष्ठः–

**इज्योत्तरात्रयाहीन्दु–विष्णु–धातृजलोडुषु ।**
**गुरुणा सहितेष्वेषु कृतं गेहं श्रियान्वितम् ।।३०।।**

पुष्य-तीनों उत्तरा-श्लेषा-मृगशिरा-श्रवण-रोहिणी-पूर्वाषाढ़ में कोई नक्षत्र गुरु से युक्त हो, तो उसमें गृहनिर्माण से गृह श्रीयुक्त रहता है ॥३०॥

नारदस्तु–

**श्रवणाषाढयोश्चैव रोहिण्यां चोत्तरात्रये ।**
**गुरुवारे कृतं वेश्म राजयोगमिहोच्यते ।।३१।।**

श्रवण-उत्तराषाढ़-उत्तराभाद्रपद-उत्तराफाल्गुनी-पूर्वाषाढ़-रोहिणी नक्षत्र व गुरु का दिन गृहारम्भ में राज्य देता है ॥३१॥

वसिष्ठः–

**द्विदैवताष्ट्रवारीश–रुद्रादित्यवसूडुषु ।**
**शुक्रेण सहितेष्वेषु कृतं धान्यप्रदं गृहम् ।।३२।।**

यह पूर्व श्लोक २९ के अनुकूल होने से स्पष्ट है ॥३२॥

नारदः–

**अश्विनी–शततारासु विशाखाभाद्रचित्रकैः।**
**धनिष्ठादितिभे शुक्रे संयुक्ते शुक्रवासरे।।३३।।**
**गृहं नाटकशालाख्यं देवागारं कृतं शुभम्।**
**तद्वेश्मनि प्रजातस्तु कुबेरसदृशो भवेत्।।३४।।**

अश्विनी-शतभिषा-विशाखा-उत्तराभाद्र-चित्रा-धनिष्ठा-पुनर्वसु ये नक्षत्र शुक्र से युक्त हों व शुक्र का ही दिन भी हो, तो नाटक,सिनेमा,रंगरेली,धर्मशाला, देवालय के निर्माण से स्वामी कुबेर जैसा धनाढ्य होता है ।।।३३-३४।।

रामः–

**सारैः करेज्यान्त्यमघाम्बुमूलैः कौजेऽह्नि वेश्माग्निसुतार्तिदं स्यात्।**
**सज्ञैः कदास्त्रार्यमतक्षहस्तैर्ज्ञस्यैव वारे सुखपुत्रदं स्यात्।।३५।।**

हस्त-पुष्य-रेवती-मघा-पूर्वाषाढ़-मूल भौमसहित व भौम का दिन गृहारम्भ में अग्निभय व पुत्रकष्ट देता है । रोहिणी-अश्विनी-उत्तराफाल्गुनी-चित्रा-हस्त बुधयुक्त व बुध का दिन गृहारम्भ में सुख व पुत्र देता है ।।३५।।

वसिष्ठः–

**मूलं च रेवती चैव कृत्तिकाषाढमेव च।**
**पूर्वाफाल्गुनिहस्तश्च मघा चैव तु सप्तके।।३६।।**
**एषु भौमेन युक्तेषु वारे तस्यैव वेश्म यत्।**
**अग्निना दह्यते कृत्स्नं पुत्रनाशश्च जायते।।३७।।**

मूल-रेवती-कृत्तिका-पूर्वाषाढ़-पूर्वाफाल्गुनी-हस्त-मघा ये सात नक्षत्रों में जो नक्षत्र मंगल से युक्त व मंगल का दिन हो, तो निर्मित गृह अग्नि से पूर्ण भस्म हो जाता है व पुत्र की मृत्यु होती है ।।३६-३७।।

वसिष्ठः–

**आग्नेयनक्षत्रगे सूर्ये चन्द्रे च संस्थिते यदि।**
**निर्मितं मन्दिरं नूनमग्निना दह्यतेऽचिरात्।।३८।।**

कृत्तिका या विशाखा नक्षत्र में सूर्य हों व वही नक्षत्र चन्द्रमा का भी नक्षत्र हो, तो निर्मित गृह निश्चित शीघ्र अग्नि से भस्म हो जाता है ।।३८।।

वसिष्ठः–

**हस्तार्यम–त्वाष्ट्र–दस्र–चतुरास्येन्दुभेषु च।**
**बुधेन सहितेष्वेषु धन–पुत्र–सुखप्रदः।।३९।।**

हस्त-उत्तराफाल्गुनी-चित्रा-अश्विनी-रोहिणी-मृगशिरा नक्षत्रों में बुध हो, तो इसमें निर्मित गृह धन, पुत्र व सुखदाता होता है ॥३९॥

रामः–

**अजैकपादहिर्बुध्न्य–शक्रमित्राऽनिलान्तकैः ।**
**समन्दैर्मन्दवारे स्याद्रक्षोभूतयुतं गृहम् ॥४०॥**

पूर्वाभाद्रपद-उत्तराभाद्रपद-ज्येष्ठा-अनुराधा-स्वाती-भरणी नक्षत्र शनियुक्त हों व शनि का दिन हो, तो गृहनिर्माण से गृह राक्षस-भूत-प्रेत-बाधा से पीड़ित रहता है ॥४०॥

वसिष्ठः–

**अजपाद्द्वितये याम्य–मित्रेशानिलभेषु च ।**
**यत्कृतं शनिसंयुक्तेऽस्मिन् गृह्यते यक्षराक्षसैः ॥४१॥**

पूर्वाभाद्रपद-उत्तराभाद्रपद-भरणी-अनुराधा-आर्द्रा-स्वाती ये नक्षत्र शनि से युक्त हों व शनि का दिन हो, तो निर्मित गृह में यक्ष-राक्षस भय देते रहते हैं ॥४१॥

नारदः–

**ज्येष्ठाऽनुराधके चैव भरणी स्वातिपूर्वभे ।**
**धनिष्ठास्वपि ऋक्षेषु शनिः तिष्ठेद्दिनस्य च ॥४२॥**
**कृपणो नामतः प्रोक्तो धनधान्यादिके गृहे ।**
**पुत्रो जातोऽथवा तस्मिन् गृह्यते यक्षराक्षसैः ॥४३॥**

ज्येष्ठा-अनुराधा-भरणी-स्वाती-तीनों पूर्वा-धनिष्ठा इनमें से किसी नक्षत्र पर शनि व शनि के दिन में निर्मित गृह का नाम कृपणवास्तु होगा,उसमें धन-धान्य की पूर्ति रहेगी; किन्तु उसमें उत्पन्न बालक को यक्ष-राक्षस ग्रहण करते हैं, अर्थात् उसमें बालकों को सर्वथा भूत-बाधा रहती है ॥४२-४३॥

विष्णुधर्मोत्तरे च–

**प्रासा[१]देष्वेवमेवं स्याद् वापीकूपेषु चैव हि ॥४४॥**

विष्णुधर्मोत्तर-पुराण के अनुसार प्रासाद-कुआँ-बावली प्रभृति प्रत्येक के निर्माण में भी पूर्वोक्त दोष-गुण व मुहूर्तों का विचार करना चाहिए ॥४४॥

**॥ इति वास्तुकुण्डलीनामैकादशतमं सोपानम् ॥**



१. प्रासादो नाम देवगृहमिति ।

# अथ शिलान्यासं नाम द्वादशतमं सोपानम्

सूत्रधारः–

**सम्यग् निमित्तशकुन–स्वस्तिपुण्याह–वाचिते।**
**हर्षोदये च मनसः कुर्याद् वास्तोर्निवेशनम्।।१।।**

शिलान्यास के अवसर पर भलीभाँति निमित्त शकुनादि का विचार कर स्वस्तिवाचन पुण्याहवाचन करके प्रसन्नचित्त (हर्षोल्लास) से वास्तु का निवेश करना चाहिए ॥१॥

**भद्रः प्रकृतिशास्त्रज्ञः शुचिः स्नातः समाहितः।**
**कर्मारभेत स्थपतिः कृतदेवार्चनक्रिया।।२।।**

शास्त्रवेत्ता भद्राकृति स्नानादि कर्म से पवित्र मन स्थपित वास्तु सम्बन्धी देवार्चन करके गृहारम्भ करें ॥२॥

तत्र तावच्छिलालक्षणम्–

**पूर्णां समामविकलां चतुरस्रामनिन्दिताम्।**
**शिलामाद्यां चये साध्वीं परीक्षेत विचक्षणः।।३।।**

शिला सर्वाङ्गपूर्ण चतुरस्र निम्नोन्नत दोषरहित साधुशीला (दर्शनप्रिया) होनी चाहिए ॥३॥

पुनः शिलालक्षणमुपकरणञ्च–

**कुम्भाङ्कुश–ध्वज–च्छत्र–मत्स्य–चामर–तोरणैः।**
**दूर्वाक्षत–फलोष्णीष–पुष्प–स्वस्तिक–वेदिभिः।।४।।**

कलश-अंकुश-ध्वज-छत्र-मत्स्य-चामर (चँवर) तोरण-दूर्वा-नारियल-चाँदनी (उष्णीष)-अक्षत-पुष्प-स्वस्तिक व पूजनोपयोगी वेदी या चौतरों से सुशोभित उपर्युक्त लक्षणवती शिलादिकों के पूजनीय माङ्गलिक फल-पञ्चामृत के साथ यज्ञभूमि पर वास्तु-पूजन की व्यवस्था होनी चाहिए ॥४॥

**नन्द्यावर्तैः सचमरैः कूर्मपद्मनिशाकरैः।**
**वज्रैः प्रशस्तैः प्राकारैर्भूषिताः कर्मणो हिताः।।५।।**

वास्तु की आकृति नन्द्यावर्त-सचामर-कूर्म-कमल-चन्द्रप्रभाभासित-वज्रप्रभृति प्रशस्त प्रासादों को आकृति का यथोपलब्ध भूषाओं से भूषित गृह का निर्माण हितकर होता है, अर्थात् जिन प्रासादों का

भविष्य में वर्णन करेंगे, उनकी ही आकृति के भव्य पूजनस्थल बनाना चाहिए, जिसे देखने मात्र से प्रसन्नता की अनुभूति हो ।

**विशेष–** शिलायें भी अलंकृत होनी चाहिए । जिन चिह्नों का ऊपर उदाहरण दिया गया है, उनसे तथा यथोपलब्ध अन्य अलङ्कारों से अलंकृत शिलायें हितकारिणी होती हैं ॥५॥

शिलादोषः–

**दीर्घा ह्रस्वाल्पविषमा–च्छामाध्माताऽपरीक्षिता ।**
**दिङ्मूढा चाङ्गहीना च सास्थ्यङ्गारा सशर्करा ॥६॥**
**खण्डा दुःपक्वनिर्भिन्ना कृष्णा दोषभयावहा ।**
**नृणां पशुतुरङ्गाणां पदाङ्का स्वस्तिवृद्धये ॥७॥**

आवश्यकता (प्रमाण) से लम्बी-छोटी लघु आकार-विषम-आध्मात-(अपरिनिष्ठ) अपरीक्षित-टेढ़ी-अङ्गहीना-टूटी-फूटी-धूमित-कङ्कण-शल्य-कोयलायुक्त अपक्व व काली शिलायें दोषी, भयावह होती हैं । नर-पशु-स्वस्तिक-अश्व इनके चरणों से चिह्नित शिलायें स्थपति व कर्ता की वृद्धि के लिए होती हैं। अथवा देवचरणांकित शिलायें भद्र मानी गई हैं ॥६-७॥

**क्रव्यादमृगविहङ्गानां पादैः स्पृष्टास्तु वर्जयेत् ।**
**नन्दा भद्रा जया पूर्णाश्चतस्रः स्युरिमाः शिलाः ॥८॥**

मांसाहारी पशु-पक्षी-मृगों के चरणों से स्पृष्ट स्पर्श (चिह्नित) शिलाओं का त्याग करना चाहिए; क्योंकि ये मांगलिक नहीं होती हैं। नन्दा-भद्रा-जया-पूर्णा ये चार शिलायें हैं, जिनका वास्तुपूजन में उपयोग होता है ॥८॥

**वासिष्ठी काश्यपी तद्वद्भार्गव्याङ्गिरसीरिताः ।**
**तत्र प्रागुत्तरे देशे सन्निवेशस्य वास्तुनः ॥९॥**

उन्हीं चार शिलाओं के वासिष्ठी-काश्यपी-भार्गवी व आङ्गिरसी क्रम से उपनाम हैं अथवा कर्मकाण्ड वास्तुपद्धति के अनुसार वासिष्ठी प्रभृति चार आधारशिलायें हैं। इनका लक्षण भी शिला के शुभ लक्षणों जैसा ही होना चाहिए; क्योंकि इस श्लोक में तद्वत् शब्द का प्रयोग पूर्व का उद्बोधक है। वास्तु भूमि या वास्तु निवेश स्थान से प्रागुत्तर ईशानकोण में पूजनोपयोगी मण्डप स्थान (वेदिका) होनी चाहिए ॥९॥

**नैऋत्यां वा सकुसुमां समां गोचर्मसम्मिताम् ।**
**वेदीं सगन्धकलशां चतुरस्रां प्रकल्पयेत् ॥१०॥**

ईशान या नैऋत्यकोण में गोचर्म मात्र विस्तार की चौकोर (चतुरस्र) समतल कलश व सुगन्धित द्रव्यों से सुसमलंकृत आह्लादक वेदी का निर्माण करना चाहिए।

**विशेष**— सकलश का तात्पर्य है कि वासिष्ठी आदि आधारशिलाओं के ऊपर क्रमशः यथाशास्त्र समलंकृत पद्म-शंख-महापद्म व धनञ्जय ये चार कलशों को स्थापित कर इनके (कलशों के) ऊपर पूर्वादि से क्रमशः नन्दादि प्रभृति शिलायें स्थापित की जाँय। पद्धति या गृह्यसूत्र देखें ॥१०॥

**आग्नेय्यामादितो नन्दां स्थापयेत्क्रमशः शिलाम्।**
**अकालमूलरव्यङ्गैः सपद्मोत्पन्नपल्लवैः ॥११॥**
**सर्वौषधिहिरण्याद्यैर्हेमराजतमृण्मयैः ।**
**कुम्भैस्ताम्रमयैश्चापि मन्त्रैस्तामभिषेचयेत् ॥१२॥**
**तीर्थप्रस्रवणाम्भोभिः सरत्नाक्षतपङ्कजैः ।**
**सुगन्धिभिः सुपुण्याहमभिषेकं प्रयोजयेत् ॥१३॥**
**जाह्नवी–यमुना–रेवा–सरस्वत्यादिसम्भवैः[1] ।**
**महानदीजलं शस्तं शुभतीर्थभवं तथा ॥१४॥**

**शिलापूजन**—गङ्गा-यमुना-रेवा-सरस्वती-प्रभृति देवनदियों या नदों या महातीर्थों का जल, सप्तमृत्तिका, संगम की रेणु, पञ्चरत्न, पञ्चपल्लव, पुष्प, दूर्वा, अक्षत, दही, सर्वौषधि, पञ्चामृत, पञ्चगव्य प्रभृति यथापद्धति पूजनीय द्रव्यों से सुवर्ण-रजत-ताम्र या मिट्टी के चार कलशों का यथाविधि पूजन व यथोक्त पूजनोत्तर कलश के जल से शिलाओं का सिञ्चन करके क्रमशः अभीष्ट खाते में या वास्तु-भूमि के अग्निकोण में नन्दा, नैऋत्य में भद्रा, वायव्य में जया व ईशान में पूर्णा को स्थापित करे ॥११-१४॥

**तथाद्रि–वन–देशान्तर–देवायतनजानि च।**
**अभिषेकार्थमम्भांसि यथालाभमुपाहरेत् ॥१५॥**

पर्वत, वन या इनके प्रान्त, मध्य, सन्निकट, देवायतन-पोखरा-बावली-प्रभृति जो भी सुप्रसिद्ध पुण्य सलिलाशय उपलब्ध हों, उनके जल से भी शिलाओं का अभिषेक होना चाहिए, अर्थात् यथोपलब्ध पुण्य सलिल अभिषेकार्थ लाये जाँय ॥१५॥

**मन्त्रेणानेन चैतासामभिषेकं समाचरेत्।**
**हिरण्यवर्णाः पावन्यः शुचयो दुरितच्छिदः ॥१६॥**

---
१. सम्भवमिति पाठान्तरम्।

**पुनन्तु शान्ताः श्रीमत्य आपो युष्मान्मधुच्युतः।**
**मन्त्रपूतेन पयसा स्नापयित्वा ततः शिलाम्।।१७।।**
**स्थपतिर्गन्धिकल्केन माङ्गल्येनाऽनुलेपयेत्।**
**हिमचन्दनपूर्णेन व्यवकीर्य सुगन्धिना।।१८।।**

उपर्युक्त आनीत पावन जलों के साथ आवाहित पूजित समस्त तीर्थरूप कलश के जल से हिरण्यवर्णा-प्रभृति श्रीसूक्त या पावनी ऋचाओं से सम्यक् अभिषिक्त कर सुगन्धित मलयचन्दन-हरिद्रा-कर्पूर के घोल से अनुलिप्त शिलाओं को ही स्थापित करना चाहिए, यह निष्कर्ष अर्थ है ॥१६-१८॥

**तरसाच्छादयेदेनां सलाजैः पुष्पदामभिः।**
**धूपमाल्योपहारैश्च दधिमांसाक्षतादिभिः।।१९।।**
**पूजयेदिष्टिकां देवीं वस्त्रयुग्मैश्च पुष्कलैः।**
**निवेशनान्ते नैर्ऋत्यां तथा विप्रानवस्थितान्।।**
**समसंख्यान् शुचीन् प्राज्ञानर्चयेद्दक्षिणाफलैः।।२०।।**

षोडशोपचार यथापद्धति पूजनोपरान्त स्थापित शिलाओं को लावा-पुष्पमाला व युग्म वस्त्रों से यथासम्भव चाँदनी से ढँक दिया जाय, और यथासम्भव युग्म जोड़ा दो-चार-छ-आठ-बारह ब्राह्मणों को यथोपलब्ध वस्त्र-फल-पुष्प-माला-चन्दन से अलङ्कृत (पूजन) कर यथासन्तोष दक्षिणा से सम्मानित किया जाना चाहिए, यह निष्कर्ष है ॥१९-२०॥

**ओङ्कार—स्वस्ति—पुण्याह—गीत—वादित्र—निःस्वनैः।**
**कर्ता जनितरोमश्च तेभ्यः कुर्यान्नमस्क्रियाम्।।**
**निवेद्य वास्तोःपतये भूतेभ्यश्च ततो बलिम्।।२१।।**

वास्तु देवताओं को ओंकारपूर्वक नामों से भावविभोर होकर माङ्गलिक गीत व वाद्यों से सम्मानित कर यथोद्दिष्ट पद्धति के अनुसार बलि देवें ॥२१॥

**तासां चतसृणामन्याः कुर्यादुपशिलाः पृथक्।**
**प्राकारस्वस्तिकाङ्के द्वे तथा श्रीवत्सलक्षणा।।२२।।**
**कोणे प्राग्दक्षिणे नन्दां वास्तुनः स्थापयेदधः।**
**अन्याः क्रमेण भद्राद्याः कोणेष्वन्येषु च त्रिषु।।२३।।**

यद्यपि स्थापन विधि पूर्वोक्त है, तब भी यहाँ स्पष्ट करते हुऐ लिखा जा रहा है, शेष सभी शिलायें प्राकार-स्वस्तिक-श्रीवत्स प्रभृति माङ्गलिक चिह्नों से चिह्नित

कर नन्दा-अग्निकोण, भद्रा-नैऋत्य, जया-वायव्य व पूर्णा-ईशानकोण के खाते में स्थापित की जाय अथवा चारों यथोक्त क्रम से अग्नि-कोण के ही खाते में अपने-अपने कोणों के अनुसार अन्य उपशिलाओं के साथ स्थापित की जा सकती हैं। यही परम्परागत शाश्वत नियम है ॥२२-२३॥

**प्रतिष्ठापनमन्त्राश्च तासां चतसृणामपि।**
**चत्वारो ऋषिभिर्गीताः शाश्वतारम्भदर्शनाः ॥२४॥**

अन्य शुभदर्शना आधारशिलाओं को भी मन्त्र-ऋषि-छन्द से सम्भूत ऋचाओं से पूजन प्रतिष्ठा करके स्थापित किया जाय ॥२४॥

**वीर्येणादिवराहस्य वेदार्थैस्त्वभिमन्त्रिताम्।**
**वसिष्ठनन्दिनीं नन्दां प्राक् प्रतिष्ठापयाम्यहम् ॥२५॥**
**सुमुहूर्ते सुदिवसे सा त्वं नन्दे निवेशिता।**
**आयुः कारयितुं दीर्घं [१]श्रियं चाग्र्यामिहावहम् ॥२६॥**

आदिवराह के बल-वीर्य व वेदमन्त्रों से अभिमन्त्रित कर वसिष्ठ-नन्दिनी नन्दा नाम शिला को मैं पूर्व प्रथम स्थापित करता हूँ। ऐसी प्रार्थना करे कि हे नन्दे! तुम शुभ मुहूर्त में मेरे द्वारा स्थापित की गई हो, अतः तुम स्वामी की (यदि पूजन स्थपति करता है, अन्यथा मेरी) आयुष्य व श्री की वृद्धि करो ॥२५-२६॥

**भद्राऽसि सर्वतोभद्रा भद्रे भद्रं विधीयताम्।**
**कश्यपस्य प्रियसुते! श्रीरस्तु गृहमेधिनाम् ॥२७॥**

कश्यपसुते हे भद्रे! तुम गृहस्वामी का कल्याण व श्री का स्थायित्व प्रदान करो ॥२७॥

**जये! विजयतां स्वामी गृहस्यास्य महात्मनः।**
**आचन्द्रार्कं यशश्चास्य भूम्यामिह विरोहतु ॥२८॥**

हे जये! सम्यक् सुमुहूर्त में पूजित व स्थापित की गई हो, अतः गृह-स्वामी के यश की इस भूमि पर जब तक सूर्य-चन्द्र रहें, तब तक निरन्तर वृद्धि करती रहो ॥२८॥

**त्वयि सम्पूर्णचन्द्राभे! न्यस्तायां वास्तुनस्तले।**
**भवत्येव गृहस्वामी पूर्णे! पूर्णमनोरथः ॥२९॥**
**इति मूलचयैर्मन्त्रैः कुर्यात् स्वस्तिकवाचनैः।**
**ताभिर्हिरण्यवर्णाभिः शिलाभिः सममद्भुतम् ॥**

**प्रागुदक्प्लवना धन्या न प्रत्यग्दक्षिणप्लवा ।।३०।।**

परिपूर्ण चन्द्रमा की आभावाली हे पूर्णे! सम्यक् समन्त्रक सुपूजित तुम वास्तु तल में स्थापित की गई हो, अतः तुम गृहस्वामी के मनोरथ को पूर्ण करो।

इस प्रकार सुवर्ण की आभा वाली शिलाओं को यथोक्त क्रम से स्थापित किया जाय और इनके स्थापनोत्तर निर्मित गृह व शिलातल (चौतरा) के प्लवन बहाव जल के गमन मार्ग की दिशा यदि उत्तर या पूर्व है, तो धन्य व पश्चिम या दक्षिण प्लव में अशुभ है ॥२९-३०॥

**इष्टिकाश्चैत्य–भवन–प्राकार–पुर–कर्मसु ।**
**विताने चितिविन्न्यासे चतुर्मुखनिकतने ।।३१।।**
**पुरोधाः शान्तिवेदीषु प्रतिमास्थापनेषु च ।**
**याज्ञिकेन विधानेन क्रमशः स्थापयेच्छिलाः ।।३२।।**

**विशेष**–ईंट-चौतरा-भवन-प्राकार-पुरनिवेश-वितान-चाँदनी (तम्बू)-छोलदारी या चतुर्मुख द्वार निकेतन के निर्माण में उपर्युक्त वैदिक विधि से पूजन व शिलाओं की स्थापना पुरोहित या याज्ञिक को करानी चाहिए ॥३१-३२॥

**चयान् समस्तांश्चिनुयाच्चतुरो विरमेत्ततः ।**
**ज्ञात्वा भित्तिप्रमाणञ्च चितेश्चयचतुष्टयम् ।।**
**समाप्य यदि कर्मैवं कनिष्ठं च यथोत्तरम् ।।३३।।**
**प्रतिष्ठितास्ताः प्रथमं भूतले सुस्थिताः समाः ।**
**न चालयेच्चालने स्याद् गृहभर्तुर्महद्भयम् ।।३४।।**

चतुर, योग्य स्थपति उपर्युक्त चारों शिलाओं का यथोक्त क्रम से चयन के बाद स्थायित्व के लिए उनका (भित्ति के प्रमाण अर्थात् निर्माण में कोई बाधा उपस्थित न हो सके) चौतरा अर्थात् स्थापित शिलाओं से चौतरे का निर्माण करे। जैसा कि स्थापित शिलाओं का उपोद्घात (चालन/हटाना बढ़ाना इधर-उधर हटाना) न हो; क्योंकि शिलाओं के चालन से महाभय की स्थिति उत्पन्न होती है ॥३३-३४॥

यथा–

**कम्पने च भयं विद्यादेतासां स्थिरतां पुनः ।**
**स्थपतेर्गृहभर्तुश्च मङ्गलं परमं विदुः ।।३५।।**

शिला के चालन से महद्भय होता है, यह पूर्व श्लोक से सिद्ध है। अब उन शिलाओं में किसी प्रकार की कार्यवाही से कम्पन भी न हो; क्योंकि कम्पन से महद्भय होता है। उनकी स्थिरता से स्थपति व गृहस्वामी का परम मंगल होता है ॥३५॥

दिक्परत्वेन शिलाचालनफलम्–

**प्राग्दक्षिणायां चलने गृहभर्तुर्महद्भयम्।**
**भार्याविनाशो नैऋत्यां शून्यं भीतिरुदग्दिशि ॥३६॥**
**गुरोश्च भयमैशान्यामपचारेऽपि तद् भवेत्।**
**प्रथमं स्थापितानेवं स्तम्भानपि न चालयेत् ॥३७॥**
**नोद्धरेत्प्रणुधाच्चैव विधिस्तुल्यो यतोऽनयोः।**
**विन्यासं प्रथमं तस्मात् कुर्यात्सम्यक् समाहितः॥**
**शिलानां स्थपतिस्तद्वत् स्तम्भानामपि सर्वथा ॥३८॥**

उपर्युक्त शिलाओं को पूर्व स्थापित स्थान से पूर्व या दक्षिण चालन (हटाने) से गृहस्वामी के लिए महद्भय होता है । नैऋत्य में भार्या का विनाश, वायव्य में भय, ईशान में गुरुजनों के लिए व पश्चिम के चालन से भी भय है । इसलिए बड़ी सावधानी के साथ प्रथम इस भाँति स्थापित किया जाय कि शिला का भविष्य में चालन करने की आवश्यकता न हो सके। इसी प्रकार स्तम्भों के चालन, कम्पनादि का भी दोष होता है; क्योंकि दोनों का यहाँ समान फल बताया गया है ॥३७-३८॥

**द्वारप्राकारशालानां नगराणां च वेश्मनाम्।**
**तत्प्रमाणो विधिर्यस्मात् तस्मात्तत्राऽऽदृतो भवेत् ॥३९॥**

उपर्युक्त शिला की भाँति द्वार-प्राकार-शाला-नगर व भवन का भी प्रमाण व विधि के विधान का भी सम्पादन करना चाहिए ॥३९॥

शिलान्याससम्भारांश्च वराहः–

**शिलाविन्यासकाले तु सम्भारांश्चोपकल्पयेत्।**
**समुद्रजानि रत्नानि सुवर्णं रजतं तथा ॥४०॥**
**सर्वबीजानि गन्धांश्च शरान् दर्भांस्तथैव च।**
**शुक्लान् सुमनसः सर्पिः केतकीं मधुरोत्तमाम्॥**
**हविष्यं मधुरं गव्यं फलानि विविधानि च ॥४१॥**

**क्षीरोदनं पूर्णकुम्भान् कोणे कोणे प्रदापयेत्।**
**नानाविधानि भक्ष्याणि पानानि विविधानि च।।४२।।**
**हुत्वाग्निं विधिवत्काले मुहूर्ते चोपपादिते।**
**गृहकोणेषु सर्वेषु पूजां कृत्वा विधानतः।।४३।।**

शिलान्यास के लिए पूर्वसञ्चित करने वाला सम्भार (सामग्री) पूजनोपयोगी वस्तु, समुद्रोत्पन्न पञ्चरत्न-सुवर्ण-चाँदी-सर्वौषधि-सप्तबीज-मधुर-गन्ध-चन्दन व पुष्प-दूर्वा-कुशा-शर-श्वेत-मनोरम-सुगन्धित पुष्प-केतकी का पुष्प-गोरोचन-अवरष-हविष्य-मधुर गोदुग्ध-दही-घी-ऋतुफल (सुपक्व)-चावल-मधु-अनेक भक्ष्य-भोज्य-पेयपदार्थ-हवनीय द्रव्य इत्यादि पद्धति प्रतिपादित वस्तुओं से वास्तुदेव-ग्रामदेव-कुलदेवों का यथाविधि निर्मित वेदी के ऊपर यथास्थान पूजन, हवन व बलि देकर सुमुहूर्त में यथोक्त पूर्व के अनुसार शिला व कलश स्थापन करना चाहिए ॥४०-४३॥

**गृहकोणेषु सर्वेषु पूजां कृत्वा विधानतः।**
**ततः पुण्याहघोषेण शिलान्यासं प्रकल्पयेत्।।४४।।**
**ऐशानमादितः कृत्वा प्राग्दाक्षिण्येन विन्यसेत्।**
**अनेनैव विधानेन स्तम्भद्वाराऽवरोहणम्।।४५।।**
**वास्तुविद्याविधानज्ञः कारयेत् सुसमाहितः।**
**शिलाविन्यासमन्त्रोऽयं निर्दिष्टो मुनिभिः पुरा।।४६।।**

प्रसङ्ग अव्यवहित पूर्व का है, पूर्वोक्त पूजन, हवन, बलि के बाद प्रत्येक कोणों (यथाचार शक्ति) में शिलान्यास व वास्तुविशेषज्ञ के उपदेशानुसार समस्त क्रिया सम्पादन की जाय, अन्यथा विपरीत होने पर दोष का प्रतिपादन होता है ॥४४-४६॥

शिलानां मन्त्राः—

**नन्दे नन्दय वासिष्ठे वसुभिश्च हितप्रजे।**
**सुचिरे नन्दने नन्दे वासिष्ठे रम्यतां गृहे।।४७।।**
**भद्रे काश्यपि दायादे पूजनं भद्रमावह।**
**सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम्।।४८।।**
**जये भार्गवि दायादे प्रजानां भद्रमावह।**
**भवभूतिकरी देवि गृहे भार्गवि रम्यताम्।।४९।।**

**सर्वबीजसमायुक्ते सर्वगन्धौषधैर्वृते।**
**प्रजापतिसुते देवि सुखदे तु महीसुते।।५०।।**
**पूर्णेऽङ्गिरसि दायादे पूर्णकामाः प्रजाः कुरु।**
**पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते।।५१।।**
**अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते।**
**इष्टिके त्वं प्रयच्छेष्टं प्रतिष्ठां गृहिणः कुरु।।५२।।**
**ग्रामस्वामि–पुरस्वामि–गृहस्वामि–परिग्रहे।**
**मनुष्य–पशु–हस्त्यश्व–धन–वृद्धिकरी भव।।५३।।**

उपर्युक्त मन्त्र नन्दादि शिलाओं की स्थापना व उनकी प्रार्थना के लिए प्रयुक्त हैं ।।४७-५३।।

शिलान्यासे वाराहो यथा–

**दक्षिणपूर्वे कोणे शिलां न्यसेत् प्रथमम्।**
**शेषाः प्रादक्षिण्येन स्तम्भांश्चैव समुत्थाप्य [1]आधारः।।५४।।**
**क्षत्रस्रगम्बरयुतः कृतधूपविलेपनः समुत्थाप्यः।**
**स्तम्भस्तथैव कार्यो द्वारोच्छ्रायः प्रयत्नेन।।५५।।**

दक्षिण-पूर्व कोण (अग्निकोण) में प्रथम शिला स्थापित कर शेष दक्षिण क्रम से स्थापित करना चाहिए । भवन में अपेक्षित स्तम्भों का भी निवेश शिलान्यास क्रम से ही करना चाहिये,स्तम्भों को छत्र (चाँदनी) माला वस्त्रादि पूजनीय वस्तुओं से पूजन व अलंकृत करना चाहिए । ये स्तम्भ भी गृह संरक्षक होते हैं और द्वारस्तम्भ द्वारशाखाओं का भी स्तम्भवत्पूजनाच्छादन करना श्रेयस्कर है ।।५४-५५।।

वराहमिहिरोक्ता पूजयितव्या देवाः–

**ब्रह्मा चैव महेन्द्रश्च दिशमैन्द्रीं समाश्रितौ।**
**कीर्तिर्धृतिश्च लक्ष्मीश्च वास्तुमध्ये प्रतिष्ठिताः।।५६।।**
**हुत्वाग्निं गृहमध्ये तु दैवतान्यर्चयेद् बुधः।**
**दिगन्तरेषु सर्वेषु दिक्षु चैव यथाक्रमम्।।५७।।**
**कुलदैवतपूजाश्च कृत्वा च कुलमेधिनाम्।**
**दिक्षु दैवीसु सर्वासु विदिक्षु च यथाक्रमम्।।५८।।**

---

१. समुत्थाप्य सम्यग् निवेशितव्य इति, न तु उत्सार्य इति ।

वास्तु के मध्य में निर्मित वेदी पर ब्रह्मा व महेश को पूर्व, कीर्ति-धृति-लक्ष्मी को मध्य, सभी दिशा व विदिशाओं, कोणों में यथास्थान स्थित स्व-स्व स्थानों में पद्धति-प्रतिपादित देवताओं व कुलदेव-ग्रामदेव-स्थानदेवों को भी यथोक्त क्रम से सविधि पूजन, हवन व बलि से सन्तुष्ट करना चाहिए। द्वार-शाखा व स्तम्भ स्थापन में भी सभी देवताओं की पूजा की जाय तथा कीर्ति, क्षमा व लक्ष्मी की पूजा द्वार-मध्य में भी करनी चाहिए ॥५६-५८॥

तन्त्रान्तरे च–

**बाह्यान्तरदेवास्तु वास्तुमध्ये यथास्थितम्।**
**तथा च सर्वान् सम्पूज्य विधिनैव पुरोहितः॥५९॥**

वास्तु के बाह्य व मध्य जो भी देवता हैं, उन सभी का विधिवत् पूजन करना ही कल्याणकारी होता है ॥५९॥

शार्ङ्गधरः–

**प्रासादेषु च सर्वेषु गृहेष्वन्येषु सर्वदा।**
**आग्नेय्यां प्रथमं स्तम्भं स्थापयेच्च विधानतः॥६०॥**

ब्रह्मशम्भुश्च–

**क्षेत्रभित्तिशिलान्यासः स्तम्भस्य रोपणं तथा।**
**पूर्वदक्षिणयोर्मध्ये कुर्यादित्याह कश्यपः॥६१॥**

प्रासाद, हर्म्य अथवा किसी प्रकार के भवन (निवास) के निर्माण में स्तम्भ व भित्ति का प्रारम्भ या शिलान्यास सर्वप्रथम अग्निकोण में ही स्थापित करना चाहिए, यही कश्यपादि सभी आर्य व मुनियों का मत है ॥६०-६१॥

**॥ इति शिलान्यासं नाम द्वादशतमं सोपानम् ॥**



## अथ शङ्कुस्थापनं नाम त्रयोदशतमं सोपानम्

तत्र शङ्क्वर्थं ग्राह्यप्रशस्तवृक्षा ग्रन्थान्तरात्–

**स्निग्धादिभूभागसमुत्थितानां न्यग्रोधबिल्वद्रुमखादिराणां**
**शमीवटोदुम्बरदेवदारुक्षीरिस्वदेशोत्थफलद्रुमाणाम् ।**
**उपोषितः शिल्पजनस्तथैषां मध्यात्तु तीक्ष्णेन कुठारकेण**
**भित्त्वा ततो दिक्पतितोत्तरस्यां शुभे च लग्ने परिगृह्य शङ्कुम् ।।१।।**

पवित्र मधुर स्निग्ध भूमि पर उत्पन्न हुए वट-बिल्व-खदिर (खैर)-शमी-औदुम्बर-देवदारु-क्षीरी व स्वदेशोत्पन्न फलद वृक्षों में कोई वृक्ष हो,उपोषित शिल्पीकृत भूत विसर्जन (पूजन) बलि के बाद उन वृक्ष समूहों में उत्तर दिशा में स्थित व छेदनोपरान्त उत्तर दिशा में पतित वृक्ष से (दिक्पतियों, वनस्पतियों की पूजा करके) तीक्ष्ण कुठार (टाँगी) से छेदित शङ्कु के लिए काष्ठ शुभ लग्न में ग्रहण करें ॥१॥

शङ्कुकरप्रमाणादिलक्षणम्–

**करप्रमाणं परतश्चतस्रस्तदर्धमानेन ततोऽनुगृह्य ।**
**नीत्वा न्यसेत्तांश्च गृहे तु तावद्यावत् प्रतिष्ठा समयस्य शङ्कोः ।।२।।**
**नन्देति सूक्तिः कथितैशकोणे हुताशनाख्ये शुभगे तु चान्या ।**
**सुमङ्गली नैऋतिभागसंस्था भद्रङ्करी मारुतकोणयाता ।।३।।**
**वृषाश्वपुन्नागपदाङ्कितानां नन्दादिकानां क्रमशः शिलानाम् ।**
**अखण्डितानां सुदृढीकृतानां सुलक्षणानां ग्रहणं निरुक्तम् ।।४।।**
**कूर्मोऽथ शेषो हि जनार्दनः श्रीर्ध्रुवश्च मध्ये भवनस्य संस्था ।**
**द्वाराधिपा दिक्पतयो गजाश्च सम्पूजनीया बलिभिः समन्त्रैः ।।५।।**
**स्नानार्घ्यमाल्याम्बरधूपलेपैर्बल्योपहारैः प्रतिपूज्य शङ्कुम् ।**
**ध्रुवे शिलायाश्च ततः खनित्वा शङ्कुं प्रतिष्ठाप्य तथा च कुम्भान् ।।६।।**
**लाजाक्षता व्रीहिसपञ्चगव्यमध्वाज्ययातं परिपूर्णसम्यक् ।**
**ऋग्भिस्तथैशं विधिवत्प्रकुर्याद् होमो ध्रुवादुत्तरतश्च कार्यः ।।७।।**

शङ्कु का कर प्रमाण चतुष्कोण १ हाथ, आधा हाथ तथा तदर्ध प्रमाण वर्णानुक्रम से यथोक्त प्रमाणसिद्ध शंकुकाष्ठ ग्रहण कर अपने घर में न्यास पर्यन्त सुरक्षित रखा जाय । पूर्वोक्त नन्दादि शिला तथा कूर्म-शेष-वराह-जनार्दन-श्री प्रभृति देवों, दिक्पालों की पूजा करके, पूजित स्थापित शिला व सरत्न कलशों

के पार्श्व में यथोक्त स्थानों में शंकुओं को भी स्थापित किया जाय। शंकुनिवेश से शिलाओं का स्थायित्व होता है। अन्य श्लोकार्थ प्रसिद्ध है ॥२-७॥

शङ्कुस्थापने लग्नशुद्धिः–

**धनुर्वणिग्गोयुगनारिकुम्भे वास्तुप्रतिष्ठाकरणे प्रधानम्।**
**एतच्चतुर्थं गृहसंज्ञकर्क्षं जलोद्भवं तच्छुभमुद्दिशन्ति ॥८॥**
**असम्भवे शुक्रशशाङ्कयोगाज्जलाश्रयं प्राहुरतीन्द्रियज्ञाः।**
**एषां नवांशेऽन्यगृहे शुभर्क्षे कर्तुर्व्ययाष्टत्रिककोणवर्ज्ये ॥९॥**
**केन्द्रत्रिकोणज्वलनाख्यलाभार्थावस्थितेष्वीज्यसितेन्दुजेषु।**
**गृहं समृद्धं सुदृढं जनाढ्यं व्यये तृतीये ज्ञगुरू समृद्धौ ॥१०॥**
**वाच्यं तथा सूर्यकुजार्कजेषु तृतीयषष्ठायगतेषु नित्यम्।**
**शेषेष्वतोऽन्येषु विशेषतस्तु चौराग्निदाहक्षतरोगजाड्यम् ॥११॥**
**लग्नात्तृतीयाम्बुषडायगेन्दौ कार्यं गृहं स्त्रीधनधान्यदासैः।**
**अभीष्टमन्येषु गतोऽन्यथातो धिष्ण्यं गृहञ्चातिगुणातिरिक्तम् ॥१२॥**
**प्रवेश एवं भवनस्य कार्यो विप्रादिकानां यदुदीरितं प्राक्।**
**किन्त्वत्र गोजाविकवाहनानां विना स्थिरैःस्वाष्टसमैः प्रवेशः ॥१३॥**

यद्यपि गृहारम्भ के समय शिलान्यास के साथ ही शंकु का निवेश भी होता है, जिससे शंकु स्थापन के मुहूर्त का पृथक् उल्लेख उचित न होते हुए भी प्रसङ्गवश शंकुस्थापन में मुहूर्तों का भी उद्धरण दिया जा रहा है। जो निम्न है। धनु-तुला-वृष-मिथुन-कन्या-कुम्भ ये लग्न वास्तु-प्रतिष्ठा में मुख्य हैं। इन लग्नों से चतुर्थ स्थान गृहसंज्ञक जलोद्भव (जलवाचक) है, अतः इसके शुभत्व का प्रतिपादन किया जा रहा है अथवा चतुर्थ स्थान जल व गृह का वाचक होने से शुभ होना चाहिए। यदि चतुर्थ भाव जलाश्रय (जल-संज्ञक) मुहूर्त के समय न प्राप्त हो सके, तो शुक्र या चन्द्रमा का राशि, अंश दृष्टि व वास किसी प्रकार से सम्बन्ध या चतुर्थ भाव राशि शुभ ग्रहों का हो। साथ ही गृहस्वामी के राशि-लग्न से वह चतुर्थ गृह राशि उपचय ३।६।१०।११ स्थानीय होना चाहिए। बुध-गुरु-शुक्र केन्द्र त्रिकोण व उपचय स्थानों में हों तो आरम्भ गृह सुदृढ (बहुकाल-स्थायी) जनसंकुल रह सकता है। गुरु-बुध व्यय व तृतीय में भी समृद्धिकारक होते हैं।

अपि च सूर्य-कुज-शनि ३।६।११ स्थानों में नित्य शुभदायक व इनसे भिन्न स्थानों में चोर-अग्निदाह-हानि व रोग का भय देते हैं। एकाकी चन्द्रमा

आरम्भ लग्न से ३।११।४।६ में हो तो गृह स्त्री-धन-धान्य व दास-दासियों से परिपूर्ण रहता है। इसी प्रकार प्रवेश का समय भी देखना चाहिए, जो पूर्व वर्णों के उद्देश्य से कहा गया है; किन्तु गो-अज-मेष प्रभृति वाहनों के निवास गृह के निर्माण में स्थिर लग्न व नक्षत्र नहीं होना चाहिए; परन्तु आरम्भ तथा प्रवेश में भी अष्टम-चतुर्थ स्थान शुद्ध होना चाहिए। यह सम्पूर्ण स्थिति का प्रतिपादन प्रसङ्गानुसार दिया गया है ॥७-१३॥

अत्रैव सूत्रधारोऽपि—

**वर्णानां यानि दारूणि कीलकार्थं नियोजयेत्।**
**इदानीं तानि वक्ष्यामि श्रेयःकीर्तिहिताय च ।।१४।।**

ब्राह्मणादि वर्णों के उद्देश्य से कीलक के लिए जो काष्ठ है, उनका उद्धरण मानवकल्याण की भावना से दिया जा है ॥१४॥

ते च यथा—

**खदिरोदुम्बराश्वत्थ—शाल—शाक—धवार्जुनाः ।**
**अञ्जनः कदराशोक—तिनिशारुणचन्दनाः ।।१५।।**
**शिरीष—सर्ज—न्यग्रोध—वेणवः कीलकर्मणि ।**
**पुन्नामानो द्रुमाः शस्ताः स्त्रीनामानो विगर्हिताः ।।१६।।**

खदिर (खैर)-गूलर-पीपल-शाल-शाक-धव-अर्जुन-अञ्जन-देवदारु-अशोक-तिनिश-अरुण-चन्दन-शिरीष-सर्ज-वट-वेणु ये वृक्ष कील (शंकु) के लिए प्रशस्त हैं। विशेष कर पुरुषसंज्ञक नाम वाले वृक्ष शुभ व स्त्री नाम वाले अशुभ निषिद्ध हैं। यह सामान्य नियम है। उनमें जो उपलब्ध व प्रसिद्ध लोकानुरूप हो, उसी वृक्ष का कील ग्रहण करना उचित होगा ॥१५-१६॥

वर्णानुक्रमेण—

**अश्वत्थः खदिरश्चैव विप्राणां वृद्धिकारकौ ।**
**रक्तचन्दनवेणूत्थकीलौ क्षत्रियपूजितौ ।।१७।।**
**शाकश्च खदिरश्चेति सामगानां हितावुभौ ।**
**कीलौ शालशिरीषोत्थौ वैश्यानां कीर्तितौ शुभौ ।।१८।।**
**शूद्रजातेश्च तिनिश—धवार्जुनसम्भवाः ।**
**वैश्यवेश्मसु सौभाग्यकार्ये च स्युरशोकजाः ।।१९।।**
**न्यग्रोधो वणिजां धाम्नि भूमिकर्मण्युदुम्बरः ।**
**महामात्राश्ववैद्यानां शूद्राणां स्वानुलोमजाः ।।२०।।**

वर्णों के लिये कीलक वृक्ष–

पीपल-खैर ब्राह्मण, लाल चन्दन-वेणु (बाँस) क्षत्रिय, शाल (सेमर)-शिरीष वैश्य, तिनिश-धव-अर्जुन-कीलक शूद्रों के लिए प्रशस्त हैं। सामान्यतः सभी वर्णों के लिए शाक (शाखू) व खैर का कीलक प्रशस्त होता है। विशेषकर न्यग्रोध वैश्यों के प्रकाश के लिए, शूद्रों या कृषि करने वाले सभी के लिए उदुम्बर उत्तम है। महामन्त्री व अश्ववैद्य (शालिहोत्र) के लिए अर्जुन सर्ज प्रशस्त है और शूद्रों के लिए स्वानुलोम अर्थात् शूद्रसंज्ञक वृक्षों का कीलक शुभ होता है ॥१७-२०॥

अत्रैवाऽन्यद्विशेषः–

**विप्राणां सर्ववर्णोत्थः क्षत्रियाणां त्रैवर्णिकः।**
**वर्णद्वयोक्ता वैश्यानां शूद्राणां स्वानुलोमतः॥२१॥**
**प्रतिलोमा न कर्तव्याः कीलका भूतिमिच्छता।**
**प्रमाणान्यथ कीलानां निगद्यन्ते पृथक् पृथक्॥२२॥**

**विशेष–** सभी वर्णों के लिए प्रयुक्त काष्ठ ब्राह्मण व तीन वर्णों के लिए विहित काष्ठ क्षत्रिय, द्विवर्णीय काष्ठ वैश्य व शूद्र अपने लिए प्रयुक्त काष्ठ कीलक के लिए प्रयोग में ले सकते हैं ॥२१-२२॥

अथ कीलकस्य (शङ्कोः) प्रमाणं सूत्रधारः–

**द्वात्रिंशदङ्गुलाः कीला विप्राणां स्युः शुभावहाः।**
**क्षत्रियाणां पुनश्चाष्टविंशत्यङ्गुलसम्मिताः॥२३॥**
**चतुर्विंशत्यङ्गुलाश्च वैश्यानां शुभदायिनः।**
**विंशत्यङ्गुलैः कीलाः शूद्रजातेश्च ते हिताः॥२४॥**

ब्राह्मण के लिए ३२, क्षत्रिय के लिए २८, वैश्य के लिए २४ व शूद्र के लिए २० अंगुल का शङ्कु विहित है ॥२३-२४॥

अन्यदपि–

**षडङ्गुलपरीणाहाः सर्वेष्वेते शुभावहाः।**
**ब्राह्मणक्षत्रियविशां वेदाष्टास्रषडस्रयः॥२५॥**
**षडस्रयस्तु शूद्रस्य प्रकृतेस्तु यथेच्छया।**
**दार्भमौञ्जोर्णकार्पासा विप्रादीनां यथाक्रमम्॥२६॥**

उपर्युक्त सभी कील ६ अंगुल परीणाह (परिधि गोलाई) का मंगलकारक होता है। आकार में ब्राह्मण का कील चतुष्कोण, क्षत्रिय का अष्टकोण व वैश्य का षट्कोण व शूद्र का भी षट्कोण, इन वर्णों के अतिरिक्त तथा वर्णेतर के प्रकृति व स्वेच्छा के अनुकूल मापक व आकृति बना सकते हैं। सीमानिर्धारण या गृहमाप के निमित्त सूत्र का निर्माण, क्रम से ब्राह्मणादि वर्णों के लिये कुश-मूँज-सन व कपास का होना चाहिए ॥२५-२६॥

सूत्रस्याकारः–

**अर्धपर्वपरीणाहं दृढं सूत्रन्तु वर्तितम्।**
**अलाभे स्वस्य सूत्रस्य प्रोक्तमन्यतमं बुधः॥२७॥**
**गृह्णीयात्सूत्रमन्ये तु गृह्णीयुः स्वेच्छयैव ते।**
**इत्थं सम्भाव्य सम्भारान् गृहभर्ता शुभेऽहनि॥२८॥**

उपर्युक्त स्वजातीयोक्त सूत्र की अप्राप्ति में कोई भी एक-दूसरे के सूत्र का व्यवहार कर सकता है व वर्णेतर स्वेच्छया किसी भी सूत्र का उपयोग कर सकता है; परन्तु सभी प्रकार के सूत्रों की परिधि (मोटाई) अंगुल के एक पर्व के आधे के समान होनी चाहिए । इस प्रकार सम्भार (वस्तुओं) को एकत्रित किया जाय ॥२७-२८॥

शङ्कुग्रहणसमयं सूत्रधारः–

**शुक्ले पक्षे शुचिस्नातः स्थपतिश्च सिताम्बरः।**
**गृहस्थाननिमित्तानि देवस्थानानि लक्षयेत्॥२९॥**
**कुसुमाक्षतमयाश्चैव कर्तव्या गृहदेवताः।**
**आदौ स्थानानि शङ्कूनां परीक्ष्येत समन्ततः॥३०॥**

उपर्युक्त समस्त वर्णित वस्तुओं को यथावसर एकत्रित कर स्थपति या गृहस्वामी शुद्ध स्नान कर श्वेत वस्त्र धारण कर शुक्लपक्ष की शुभ तिथियों में गृह देवताओं का पुष्पाक्षत से प्रतीक बनावे और शङ्कुओं के निवेश स्थान का परीक्षण (निरीक्षण निश्चय) भी कर लेना चाहिए ॥२९-३०॥

**तेषु सर्वेषु कर्तव्यमर्चनन्तु यथाविधि।**
**गृहस्य मध्ये सिक्त्वा तु निरूप्य ब्रह्मणः [1]पदे॥३१॥**
**गोमयेन समालिप्तां कुर्याद् वेदीं सुलक्षणाम्।**
**चतुरस्रां चतुर्द्वारामक्षतैः सुप्रतिष्ठिताम्॥३२॥**

---
१. पदमिति पाठः साधु प्रतिभाति ।

उपर्युक्त शङ्कुस्थानों की यथाविधि पूजा करके गृहक्षेत्र के मध्य में चौकोर चतुर्द्वार वेदी का निर्माण किया जाय और उसे गोमय से उपलिप्त कर यथापद्धति वस्त्रास्तरणादि कोष्ठ निर्माण द्वारा तत्तद्देवताओं के स्थानों को पुष्पाक्षत से अलंकृत (चिह्नित) कर दिया जाय ॥३१-३२॥

**तस्यां मध्ये प्रतिष्ठाप्यो हैमः कुम्भोऽथ राजतः ।**
**ताम्रको मृण्मयो वापि पूर्वालाभे परः परः ।।३३।।**
**अकालमूलः सोऽव्यङ्गो जलपूर्णः स्वलङ्कृतः ।**
**मणिरत्नप्रवालैश्च स्वर्णरूप्येण गर्भितः ।।३४।।**

उस वेदी के मध्य (बीच) में माङ्गलिक द्रव्यों व वस्त्रों से अलङ्कृत कर यथोक्त पद्धति के अनुसार सुवर्ण-रजत-पञ्चरत्न सहित जल से पूर्ण करके सुवर्ण-रजत-ताम्र तथा मृण्मय उत्तरोत्तर यथालाभ अव्यङ्ग परिपूर्ण सर्वाङ्ग कलश को स्थापित किया जाना चाहिए। गृहक्षेत्र के बीच या यथाचार आचार्योक्त शिला स्थापन समय में ही यथोक्त देवपूजन व शङ्कुस्थापन किया जाना चाहिए ॥३३-३४॥

**कुम्भस्योत्तरस्थाने (भागे) तु कीलकान् स्थापयेद् बुधः ।**
**कीलानष्टौ परीक्ष्येत स्थापयेच्च यथाविधि ।।३५।।**
**श्वेतचन्दनलिप्तांस्तान् श्वेतपुष्पैर्विभूषयेत् ।**
**सालक्तकान् सुरभिणा धूपयेच्च सुधूपितान् ।।३६।।**

श्वेत चन्दन, सुगन्धित (इत्र) द्रव्य, अलक्तक वस्त्र, पुष्पमाला से अलङ्कृत करके स्थापित कलशों के उत्तरभाग में कीलों को स्थापित करना चाहिए। मूल में आठ कीलों का संकेत है, इनमें चार भूमि के चार [1]कोणों व चार-चार कलशों के उत्तर भाग में स्थापित करना चाहिए ॥३५-३६॥

**ऊर्णामयेन सूत्रेण त्रिवर्णेनाभिवेष्टयेत् ।**
**मधु–सर्पि–दधि–क्षीरैर्मूलभागेषु लेपयेत् ।।३७।।**

ऊनी सूत्र या तीन रंग की सम्मिलित त्रिसूत्रिका से परिवेष्टित करके मधु-दही-घी-दूध अर्थात् पञ्चामृत से शङ्कुमूल को सिञ्चित करना चाहिए ॥३७॥

**अर्चयेत् परशुं सूत्रमष्ठीलादीनि सर्वतः ।**
**अथोपकरणान्यत्र धूपपुष्पाक्षतादिभिः ।।३८।।**

गृहोपयोगी हथौरी, करनी, कुदाल, वसुली, पाषाणमय पात्रों का भी यथोक्त विधि से तदधिष्ठातृ देवों का यथोपचार पुष्पादि से पूजन करना चाहिए ॥३८॥

---

१. आठ कीलों का आठ दिशाओं में आरोपण का उद्देश्य भी है।

**ततः पूर्वोत्तरे कोणे भागे सप्तार्चिषः पदे।**
**गोमयेन समालिप्ते कुशास्तरणमास्थितः ।।३९।।**
**अग्निकार्यं प्रकुर्वीत पुरोधा शान्तिमेव च।**
**सांवत्सरः शुचिस्नातः कृतस्नानः समाहितः ।।४०।।**

वास्तुवेदी के ईशानकोण शिखी के स्थान में गोमयोपलिप्त भूमि पर कुशास्तरण पर शुद्ध स्नान सुवास धारण कर सांवत्सरिक-स्थपति वा गृह-स्वामी पूजित आवाहित देवों की आहुति व बलि के बाद अग्रिम श्लोकों के अनुसार कार्य प्रारम्भ करे ।।३९-४०।।

शंकुस्थापनक्रमः सूत्रधारः-

**ओङ्कारस्वस्ति-पुण्याहै-र्गीतवादित्रनिःस्वनैः ।**
**ततो विप्रैः सह स्वामी कुर्यात्तस्य प्रदक्षिणम्।।४१।।**

उपर्युक्त पूजनादि कर्म के अन्त में गृहस्वामी ब्राह्मणों के साथ स्वस्ति-वाचन गीत-वाद्य घोषों के साथ वेदी की परिक्रमा करके अग्रिम नियमों के अनुसार शंकु ग्रहण करे ।।४१।।

शङ्कुग्रहणविधिस्तत्रैव-

**निविष्टः प्राङ्मुखः शङ्कुं धृत्वा दक्षिणपाणिना।**
**पश्चादादाय वामेन प्रतिष्ठाप्य च भूतले।।४२।।**
**मन्त्रानुच्चारयेद्धीरो हन्यात्परशुना ततः।**
**विशन्तु भूतले नागा लोकपालास्तथैव च।।**
**प्रतिष्ठन्तु गृहे चास्मिन्नायुर्बलकराश्च स्युः ।।४३।।**

शङ्कुस्थापन स्थान में पूर्वाभिमुख बैठकर दक्षिण हाथ से ग्रहण कर उसे वाम हाथ में रखकर "विशन्तु--" इत्यादि मन्त्र को पढ़ते हुए निश्चित स्थान पर शंकुनिवेश करें ।।४२-४३।।

शङ्कुनिवेशहेतुप्रहारविधिस्तत्रैव-

**प्रहारान् सुस्थिरानष्टौ दद्यात्कीलस्य मूर्द्धनि।।४४।।**

भूमि में निवेश के लिए कीलक के शिर पर सावधानी से सुस्थिर (गम्भीर) आठ प्रहार तक कर सकते हैं, जिससे कीलक सुदृढ़ सुस्थिर हो जाय ।।४४।।

कीलकनिवेशसम्बन्धिनिमित्तावलोकनम्-

**हन्यमाने ततः कीले निमित्तान्युपलक्षयेत्।**
**गो-विप्र-रथ-नागाढ्याः कन्या-नृप-वराः स्त्रियः ।।४५।।**

**शंखदुन्दुभिवंशानां तथा गीतस्य च ध्वनिः।**
**आविर्भवति यद्यस्मिन् हन्यमाने पशुस्तदा।।४६।।**

कीलक निवेश के समय यदि रथ पर सवार या रथ के साथ या केवल गो-विप्र-नृप-कन्या या कुलाङ्गना दिखाई दे अथवा शंख-भेरी-दुन्दुभि-वीणा-वंशी की ध्वनि सुनाई दे, तो अग्रिम श्लोक के अनुसार फल कहना चाहिए ।।४५-४६।।

**सततं सुखमाप्नोति शाल्यैश्वर्यैश्च वर्द्धयेत्।।**

पूर्व श्लोक के अनुसार शकुन उपस्थित हो तो निरन्तर धन-धान्य-ऐश्वर्य व सुख की वृद्धि की सूचना है ।

विपरीतशकुनम्—

**हतं क्षुतं विपन्नं वा निषेधः सूत्रकीलयोः।।४७।।**

अथवा प्रहार करते हुए क्षुत (छींक) विपन्न निषेध जैसा शब्द कीलक स्थापन व सूत्र प्रसारण के समय अशुभ है ।।४७।।

अन्यदपि—

**पाखण्डिनां च सर्वेषां दर्शनं न सुखावहम्।।४८।।**

समस्त प्रकार के पाखण्डी धूर्तों का दर्शन शुभ नहीं है ।।४८।।

**दृष्ट्वा शुभनिमित्तानि ततः शङ्कुं निवेशयेत्।**
**हन्यमानो यदा कीलो विशेद्भूमौ शनैः शनैः।।४९।।**
**कर्मसिद्धिर्भवेत्तत्र गृहं रत्नपरिच्छदम्।**
**हन्यमानेऽपि न विशेद्धरित्रीं कीलको यदा।।**
**न तत्र कार्यसिद्धिः स्यान्निमित्तं तत्र लक्षयेत्।।५०।।**

शुभ शकुन का अवलोकन व दर्शन करके कील का निवेश करना चाहिए। यदि प्रहार करने पर कील धीरे-धीरे भूमि में प्रविष्ट होता है, तो गृह की सर्वाङ्ग सर्वसिद्धि के साथ पूर्ति का शुभ लक्षण है और प्रहार के बाद कील प्रविष्ट नहीं होता है, तो कार्यसिद्धि अर्थात् गृह-निर्माण में बाधा उत्पन्न होने की सूचना है। यही उपर्युक्त निमित्त का फल है ।।४९-५०।।

अन्यदपि—

**एकेनापि प्रहारेण यत्र कीलो विशेन्नहि।**
**न सिद्धिं याति [१]तत्रौकः कृतं वा नोपभुज्यते।।५१।।**

१. ओकः गृहम् ।

एक ही प्रहार से यदि कील भूमि में प्रविष्ट न हो जाय तो भी गृह के पूर्ण होने में बाधा व पूर्ण होने पर भी अशान्ति है ॥५१॥

प्रहारपात्रम्–

**आयसष्ठीलया हन्यान्न काष्ठेन कदाचन ॥५२॥**

लौह के पात्र (हथौरी) से ही प्रहार करना चाहिए, काष्ठ से नहीं ॥५२॥

प्रहारपात्रफलम्–

**काष्ठेन ताडितः कीलो वह्निदोषकरो भवेत्।**
**अश्मना यदि ताड्येत तदा व्याधिं प्रयच्छति ॥५३॥**

काष्ठ से ताड़ित कीलक अग्निभयकारक होता है, पाषाण के प्रहार से व्याधि का भय है ॥५३॥

अन्यदपि शङ्कुनिमित्तम्–

**ऐन्द्रीं प्रति नतः कीलो धनसम्मानकारकः।**
**आग्नेय्यां प्रणते कीले भवत्यग्निभयं महत् ॥५४॥**

यदि निवेशन के समय कील पूर्व में झुक जाय, तो धन-धान्य, सम्मानकारक व अग्निकोण में महद् अग्निभयदायक है ॥५४॥

**याम्यायां मरणं राज्ञां दिशि राक्षसतो भयम्।**
**धननाशस्तु वारुण्यां वायव्यां रोगतो भयम् ॥५५॥**
**सौम्यं सौम्यानते राजप्रसादायेशतो नतेः।**
**कीलके कूर्चके जाते पुत्रपौत्रान्वयैर्गृहम् ॥५६॥**
**परमामृद्धिमाप्नोति धनधान्यैश्च वर्धते।**
**हन्यमानो यदा यत्नात्कीलः कश्चित्स्फुटो भवेत् ॥५७॥**
**नाशं विद्यात्तस्य पत्न्या ज्येष्ठस्य तनयस्य च।**
**यदि भज्येत कीलः स्यात्स्वामिनो जायते वधः ॥५८॥**
**यदा कीलः पतेद्धस्ताद् भ्रंशः स्यात् स्थपतेस्तदा।**
**हस्तभ्रष्टश्च स भवेत् ष्ठीले च हस्तविच्युते ॥५९॥**
**सुखेन हन्यमानश्चेत्कीलः स्वस्थो न जायते।**
**अष्टौ प्रहारानपरांस्तस्य दद्यात्तदा पुनः ॥६०॥**

निवेश के समय यदि कील दक्षिण दिशा में झुक जाय, तो राजा (गृहस्वामी) की मृत्यु, नैऋत्य में भय, पश्चिम में धनधान्य का नाश, वायव्य

में रोगभय, उत्तर में शुभ, ईशान में राजप्रासाद (उत्तम) होता है। गाड़ते समय प्रहार से कीलक का शिरोभाग कूँची जैसा हो जाय तो वह घर पुत्र-पौत्र वंशपरम्परा व धन धान्य-ऐश्वर्य के साथ परम ऋद्धि से परिपूर्ण रहता है। हन्यमान कील यदि फट जाय तो पत्नी या ज्येष्ठपुत्र के नाश की सूचना है। यदि नत (टेढ़ा) हो जाय, तो स्वामी के वध की सूचना है। यदि हाथ से गिर जाय तो स्थपति का नाश होता है। यदि हथौड़ी के प्रहार के समय हाथ से छूट जाय तो स्वामी के हाथ की विच्युति (हाथ के टूटने का भय) होता है। सुखपूर्वक प्रहार से कीलक अच्छी तरह निवेशित न हो सके, तो पुनः हथौड़ी से आठ प्रहार करना चाहिए ॥५५-६०॥

**स्रग्गन्धधूपोपहारैः कुर्याच्च परिषेचनम्।**
**इदं साम महापुण्यं परिचिन्त्यं समासतः ।।६१।।**
**त्रैशोकन्तु जपेद् विद्वान् यावच्छङ्क्वभिषेचनम्।**
**गत्वाऽथ नैर्ऋतीमाशां ततः शङ्कुं निवेशयेत्।।६२।।**

माला-पुष्प-दूर्वादि से अच्छी प्रकार पूजन[1] अभिषेक पर्यन्त पुण्यदायक साम (शान्ति-ऋचा) का पाठ करते रहे, इसके बाद यदि चारों कीलों को चार कोण में निवेश करना है, तो दूसरा कील पूर्ववत्पूजनादि कार्य सम्पन्न कर नैर्ऋत्य प्रभृति कोण दिशाओं में निवेश करे, अन्यथा एक ही स्थान अग्निकोण में चारों को यथाकुलाचार स्थापित किया जाय ॥६१-६२॥

**ऊर्णायवेन साम्नास्य सम्यक् स्नपनमाचरेत्।**
**वायोर्दिशं ततो गत्वा तत्र शङ्कुं निवेशयेत्।।६३।।**
**अभिषेकमहारत्नसाम्ना तस्य समाचरेत्।**
**अथैशानीं दिशं गत्वा शङ्कुं तस्यां निवेशयेत्।।६४।।**

पूर्वोक्त पूजन, अभिषेकादि समस्त क्रिया सम्पन्न कर क्रम से प्रथम शंकु अग्निकोण, द्वितीय नैर्ऋत्य, तृतीय वायव्य, चतुर्थ ईशानकोण में निवेश किये जाँय, यह क्रम आम्नाय है; परन्तु यथाचार चारों शङ्कुओं को एक ही दिशा अग्निकोण में निवेशित करें, यही क्रिया राजातिरिक्त वर्णों के लिए सम्प्रदायानुसार होनी चाहिए ॥६३-६४॥

**भाग्रेण साम्ना कुर्वीत प्राग्वत्तस्याभिषेचनम्।**
**ततोऽनुसूत्रं बध्नीयात् सव्यं द्विगुणवेष्टितम्।।६५।।**

---

१. सामवेद के ऊर्णावसथ मन्त्र से अभिषेक करे ।

**प्रदक्षिणं प्रसार्यैतदुक्तः शङ्कुक्रमो यथा।**
**बध्यमानं यदा सूत्रं शङ्कुं किमपि मुञ्चति।।६६।।**
**तदा पुत्रवधं विद्याच्छिन्नं स्व–स्वामिमृत्यवे।**
**तस्माद् यत्नः प्रकर्तव्यो यावत्सूत्रं प्रसार्ययेत्।।६७।।**

पूर्वोक्त निवेशित ईशानकोणीय शंकु को भाग्र साममन्त्रों से सिंचन करके द्विगुणित (द्विपाश) सूत्र कीलक में बाँधकर दक्षिणावर्त शंकु का क्रम से प्रसारण कर गृहभूमि को कील सहित वेष्टित किया जाय। सूत्र के बन्धन के समय (प्राक्क्रम से) सूत्र कील को छोड़ दे या स्थिर कील में कम्पन हो जाय,तो पुत्रवध,सूत्र के टूटने पर स्वामी के मृत्यु की सूचना है। इसलिए ये प्रसारण बन्धन व कीलक निवेश प्रभृति कार्य सावधानी से किये जाँय ॥६५-६७॥

**चतुर्णामपि बाहूनां पोषं च्छिन्नं न[१] दुष्यति।**
**सूत्रं प्रसार्य वितरेच्चरून् पूर्वप्रकल्पितान्।।६८।।**
**स्वेषु स्वेषु ततः स्थानेष्वनेन विधिना पुनः।**
**शङ्कुस्थानेषु दातव्याः सिताद्याश्चरवः क्रमात्।।६९।।**

इस सूत्र प्रसारण से गृहार्थ भूमि के चारों भुजाओं का माप हो जाता है। अर्थात् भूमि चतुर्भुज प्रमाणित हो जाती है। सूत्र प्रसारण के बाद शंकु स्थापन क्रम से शंकुस्थान में बलि के लिए श्वेत प्रभृति यथोक्त के अनुसार चरु का भी वितरण करें, निम्नोक्त मन्त्रों से ॥६८-६९॥

**प्राग्दक्षिणस्यां विदिशो मन्त्रं चेमं हृदा जपेत्।**
**मारुतानां च सर्वेषां मानवानां तथैव च।।७०।।**
**बलिं तेषु प्रयच्छामि मन्त्रेण परिमन्त्रितम्।**
**रक्तं बलिमुपादाय [२]नैर्ऋत्याभिमुखस्तथा।।७१।।**

प्रथम अग्निकोण में हृदय से मैं आप देव व मानव प्रभृति सभी को बलि अर्पित करता हूँ, आप स्वीकार करें और गृहस्वामी का कल्याण करें। पूर्व सूत्र से भी श्वेत चरु की बलि प्रथम अग्निकोण में दें। उसके बाद रक्त चावल की बलि नैर्ऋत्यकोण में दी जाय ॥७०-७१॥

**कृष्णां[३] बलिमुपादाय गत्वा च दिशमानिलीम्।**
**नमस्ते नागराजाय ये चान्ये ते समाश्रिताः।।७२।।**

---

१. न स्थाने च योज्यम्। २. नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः।
बलिं तेषु प्रयच्छामि रक्तमोदनमुत्तमम् ॥ ३. उड़द चावल।

**बलिं तेषु प्रयच्छामि कृष्णमोदनमुत्तमम्।**

वायव्यकोण में नागराज व उनके आश्रित प्राणियों को ओंकारपूर्वक नामोच्चारण[1] से कृष्णवर्ण की (उड़द-चावल) बलि दें और प्रार्थना करें कि मैं आपको कृष्णमोदन बलि देता हूँ, स्वीकार करें ॥७२॥

**बलिमुद्धृत्य हारिद्र्यमैशानीमाश्रयन् दिशम्।।७३।।**
**नमो रुद्रेषु सर्वेषु ये चान्ये ते समाश्रिताः।**
**प्रयच्छामि बलिं तेषां हारिद्रोदनमुत्तमम्।।७४।।**

उत्तम पीले चावल की बलि ईशानकोण में प्रधान रुद्रों व उनके आश्रितों को देकर नमस्कार करता हूँ। आप बलि ग्रहण कर गृहस्वामी व मेरी सर्वविध रक्षा करें ॥७३-७४॥

**एवमेतान् बलीन् सर्वान् यथावत्प्रतिपादयेत्।**
**ततः कुम्भोदकं पुण्यं साम्नादित्येन मन्त्रयेत्।।**
**वामदेव्येन कुर्वीत प्रोक्षणं तेन वास्तुनः।।७५।।**

**द्रुमा विप्रादीनामिति निगदिताः शङ्कुघटने**
**फलं यच्छङ्कोश्च स्फुटमिह निगदितानि बहुशः।**
**तथा सूत्राताने विधिरनु च मन्त्रैः प्रतिदिशं**
**बलिः कीलेषूक्तस्त्रिदशपरितोषाय विधिवत्।।७६।।**

उपर्युक्त वस्तु व विधि तथा ॐकारपूर्वक नाम-मन्त्रों से बलि देकर साम-मन्त्रों से वास्तु-पूजित देवों का अभिषेक, प्रोक्षण करना चाहिए। इस पूजनादि समस्त क्रिया का शिलान्यास पद्धति से ही सम्पादन करना समुचित व श्रेयस्कर होगा ॥७५-७६॥

तत्र शङ्कुविषये नारायणः–

**नाकालेऽथ विधेय उक्ततरुजोऽग्र्यात्-**
**सिद्ध–विंशाष्ट्यहस्कृत्संख्यांगुलकः ।।७७।।**

श्री नारायण भट्ट के अनुसार कथित ग्राह्य वृक्षों का कीलक ब्राह्मणादि वर्णों के क्रम से २४।२०।१६व१२ अंगुल का विहित समय व स्थान में निवेशित किया जाय ॥७७॥

ग्रन्थान्तरम्–

**स्यात्तच्चेच्चतुर्विंशाष्टिद्वादशाङ्गुलकैः क्रमात्।**
**विप्रादीनां शङ्कुमानं स्वर्णवस्त्राद्यलङ्कृतम्।।७८।।**

---

१. ॐ नमो नागराजाय बलिं समर्पयामि। इस प्रकार उच्चारण करके।

स्पष्टार्थ है, विशेष में शंकु को सुवर्ण वस्त्र लेप्य मालादि से अलंकृत करना चाहिए ॥७८॥

अत्रैव वृक्षविशेषे च–

**खदिरार्जुनशालोत्थं युगपत्रतरूद्भवम्।**
**रक्तचन्दनपालाशरक्तशालकिलालजम् ॥७९॥**
**निम्बकारञ्जकुटजं वैष्णवं बिल्ववृक्षजम्।**
**शङ्कुं त्रिधा विभज्याद्यं चतुरस्रं ततः परम्॥८०॥**
**अष्टास्रं च तृतीयांशमजस्रमृजमव्रणम्।**
**एवं लक्षणसंयुक्तं परिकल्पं शुभे दिने॥८१॥**

खैर-अर्जुन-शाल-पतयुग-रक्तचन्दन-पलाश-निम्ब-करञ्ज-कुटज-वेणु-बिल्व का शंकु होना चाहिए। इसकी आकृति एवं प्रमाण— ब्राह्मण के लिए २४, क्षत्रिय २०, वैश्य १६ व शूद्र के लिए १२ अंगुल का तीन भागों में विभक्त हो, जिसका प्रथम भाग चतुरस्र, द्वितीय अष्टास्र व तृतीय गोल बिना छिद्र का हो तथा उचित उद्दिष्ट मुहूर्त में निवेश किया जाय ॥७९-८१॥

**॥ इति शङ्कुस्थापनं नाम त्रयोदशतमं सोपानम् ॥**



# अथ रेखाकरणं नाम चतुर्दशतमं सोपानम्

अथ रेखाकरणे नारायणः—

**कं वक्षस्थलमूरुपादयुगलं संस्पृश्य विप्रादिकः।**
**रेखां सूत्रवदग्निजेन[1] रचयेत्तद्वच्च भित्तेः शिला॥१॥**

सूत्र प्रसारण की भाँति सुवर्ण शलाका से गृह-निर्माण के पूर्व सूत्रवद् ब्राह्मणादि वर्णों के लिए क्रमशः शिर, वक्षस्थल, ऊरु व दोनों चरणों से स्पर्श करके रेखा करनी चाहिए। रेखा सूत्रप्रसारण भित्तिप्रारम्भ व शिलान्यास अग्निकोण से प्रारम्भ कर प्रदक्षिण क्रम से करना चाहिए ॥१॥

अत्रैव लल्लः—

**कृत्वा सूत्रे निपातं मध्याङ्गुल्याऽथवा प्रदेशिन्या।**
**अङ्गुष्ठेनाऽथवा कनकाक्षत—रजत—मुक्ताभिः॥२॥**

आचार्य लल्ल के अनुसार प्रथम सूत्र प्रसारण कर मध्यमा-प्रदेशिनी अङ्गुली, अंगुष्ठ, सुवर्णशलाका-रजतशलाका-अक्षत या मुक्ता से वास्तु सीमा निर्धारण के निमित्त रेखा की रचना की जाय ॥२॥

भृगुश्च—

**विप्रः शीर्षं नृपो वक्षो वैश्यश्चोरू परः पदे।**
**स्पृष्ट्वा रेखां गृहारम्भे कुर्यादग्नेः प्रदक्षिणम्॥३॥**

महर्षि भृगु के अनुसार गृहारम्भ में ब्राह्मणादि वर्ण क्रम से शिर-उर-(वक्षस्थल) ऊरु व चरण से स्पर्श कर अग्निकोण से प्रारम्भ कर प्रदक्षिण क्रम से रेखा का निर्माण करें (रेखा खींचें)। यह क्रिया गृह सीमानिर्धारण के लिए है, जिसे आधुनिक विशेषज्ञ चूने से करते हैं ॥३॥

कारिकायाम्—

**अङ्गुष्ठकेन देशिन्या रेखां कुर्वीत सूत्रवत्।**
**स्वर्णेन मणिना रूप्य—मुक्ता—दधि—फलाक्षतैः॥४॥**

स्पष्ट है, केवल इसमें दही व फल से भी रेखा बनाने का विशेष निर्देश है ॥४॥

तत्रैव निषेधः—

**कुसुमैर्वा न शस्त्रेण न लोहेन च भस्मना।**
**काष्ठादिभिर्नाऽपसव्यां न वक्रां दोषदर्शनात्॥**

---

१. अग्निजेन सुवर्णेन वा अग्निकोणत इति।

**शस्त्रेण शस्त्रमृत्युः स्यादित्यादि स्पष्टमीरितम् ।।५।।**

कुसुम (पुष्प) शस्त्र-लोहा-भस्म-राख-काष्ठ व अपसव्य वामावर्त रेखा करने का विधान नहीं है। उसमें विशेष दोष का निर्देश है ।।५।।

वास्तुपद्धतौ विरुद्धवस्तुनिर्मितरेखाफलम्–

**शस्त्रेण शस्त्रमृत्युर्वै वधो लोहेन भस्मनाऽग्निभयम्।**
**तस्करभयं तृणेन च लिखिता काष्ठेन राजभयम्।।**
**वक्रा च पादलिखिता रिपुभयदा क्लेशदा विरूपा च।**
**चर्माङ्गारास्थि–लिखिता दन्तेन च कर्तुरशुभप्रदा।।**
**वैरमप्यपसव्यलिखिता प्रादक्षिण्यं सम्पदो निर्देश्याः ।।६।।**

यदि रेखा निर्माण शस्त्र से किया जाय, तो स्वामी की मृत्यु शस्त्र से होती है, लोहे से वध, भस्म से अग्निभय, तृण से चोरभय, काष्ठ से राजभय, रेखा की आकृति वक्र या चरण से की जाय तो शत्रुभय, विरूप रुक्ष होने पर क्लेश, चर्म-कोयला-अस्थि (हड्डी) व दाँत से अशुभ तथा वामावर्त लिखित रेखा वैर उत्पन्न करने वाली होती है; किन्तु शुभ वस्तु से प्रदक्षिण निर्मित रेखा सम्पत्तिकारिणी होती है ।।६।।

अत्रैव स्तम्भलक्षणे वराहः–

**समचतुरस्रो रुचको वज्रोऽष्टास्रि द्विवज्रको द्विगुणः।**
**द्वात्रिंशता तु मध्ये प्रलीनको वृत्त इति वृत्तः ।।७।।**

आचार्य वराह के अनुसार पाँच स्तम्भों का लक्षण निम्न है– समचतुरस्र रुचक, षोडश कोण का वज्र, बत्तीस कोण का द्विवज्र व मध्य में बत्तीस कोण का प्रलीन तथा वृत्त वृत्ताकार गोल होता है । उपर्युक्त कोणों का जो निर्देश है, वह आकार स्तम्भ के मध्य में होना चाहिए, उसी के अनुसार लक्षणवान् स्तम्भों का नामकरण किया गया है ।।७।।

किरणाख्यतन्त्रे च–

**वेदास्रो रुचकः स्तम्भो वज्रोऽष्टास्रियुतो मतः।**
**द्विवज्रः षोडशास्रिः स्याद् द्विगुणास्रिः प्रलीनकः।।**
**समन्तवृत्तो वृत्ताख्यः स्तम्भः प्रोक्तो द्विजातये।।८।।**

चतुरस्र स्तम्भ रुचक, अष्टास्रि वज्र, सोलह कोण वाला द्विवज्र, बत्तीस कोण का प्रलीन व चारों दिग् गोल (वृत्ताकार) का वृत्त नाम

का स्तम्भ होता है। पूर्व से यहाँ यह विशेषता है कि स्तम्भ के सर्वाङ्ग आकृति का उल्लेख है ॥८॥

स्तम्भाकृतिविषये वराहः–

**स्तम्भं विभज्यवहन[1]नवधा भागो घटोऽस्य भागोऽन्यः।**
**पद्मं तथोत्तरोष्ठं कुर्याद्भागेन भागेन।।९।।**

स्तम्भ को नव सम भागों में विभक्त कर प्रथम उद्वहन, दूसरा घट, तीसरे से आठवें तक पद्म व नवें भाग को उत्तरोष्ठ कहते हैं। यह नवाँ भाग सुन्दर व पूर्वोक्त से विशिष्ट होना चाहिए ॥९॥

अत्रोत्पलेन तु ज्ञातव्यम्–

नवधा विभक्ते स्तम्भेऽधरोर्ध्वभागचतुष्केऽधो हिरण्यादीनि कार्याणि शेषं भागपञ्चकं समचतुरस्रादिकं कार्यमिति।

स्तम्भ के नव भागों में चार नीचे के भाग को हिरण्यादि और ऊपर के पाँच भागों को समचतुरस्र करना चाहिए।

किरणाख्ये तु–

**विभज्य नवधा स्तम्भं कुर्यादुद्वहनं घटम्।**
**कमलं चोत्तरोष्ठन्तु भागे भागे प्रकल्पयेत्।।१०।।**

स्तम्भ के नव भागों में प्रथम उद्वहन, दूसरा घट, नवाँ उत्तरोष्ठ व बीच के प्रत्येक भाग कमल कहे जायेंगे ॥१०॥

गृहस्योच्छ्रितिवशेन स्तम्भस्य द्वारस्य चोच्छ्रितिस्तत्र वराहः –

**विस्तारषोडशांशः स चतुर्हस्तो भवेदुच्छ्रायः।**

गृह के विस्तार के सोलहवें भाग में चार हाथ जोड़ने पर जो मान हो,उतना ही गृह के छत (तल,भौम,स्तर,प्रजायवाचक शब्द है) की ऊँचाई होनी चाहिए।

प्रथमस्तर(भौम)वशेन द्वितीयादि-भौमोच्छ्रितिस्तत्रैव–

**द्वादशभागेनोना भूमौ भूमौ समस्तानाम्।।११।।**

प्रथम छत की ऊँचाई के बारहवें भाग से हीन प्रथम भौमोच्छ्रिति,द्वितीय भौम की उच्छ्रिति होगी एवं द्वितीय भौमोच्छ्रिति स्वोच्छ्रिति द्वादश भाग से हीन तृतीय भौमोच्छ्रिति होगी एवं उत्तरोत्तर (भौम) तलों की उच्छ्रिति होगी ॥११॥

---

१. उद्वनं धार्यते येन भागेन तद्वहनमिति स्तम्भस्य नवभागेषु प्रथमो भाग उद्वहनमिति।

यथा–प्रथमभौमोच्छ्रिति– प्रथमभौमोच्छ्रिति / १२ = द्वितीयभौमोच्छ्रिति इति ।

भित्तिप्रमाणञ्च तत्रैव–

**व्यासात्षोडशभागः सर्वेषां सद्मनां भवति भित्तिः ।**
**पक्वेष्टकृतानां दारुकृतानान्तु न विकल्पः ।।१२।।**

सभी वर्ण, जातियों के लिए विस्तार के सोलहवें भाग के बराबर भित्ति का विस्तार होना चाहिए । जैसे राजा के गृह का विस्तार १०८ हाथ है, तो इसका सोलहवाँ भाग ६ हाथ १८ अंगुल राजा के गृहभित्ति की चौड़ाई होनी चाहिए। इसी प्रकार सर्वत्र प्रयोग किया जाय ॥१२॥

गर्गश्च–

**विस्तारषोडशांशेन गृहभित्तिं प्रकल्पयेत् ।**
**हीनाऽधिका न कर्तव्या गृहभर्तुर्न शोभनम् ।।१३।।**

स्पष्ट है ॥१३॥

किरणाख्यतन्त्रे–

**पक्वेष्टानामयं व्यासो दारुजानां यथेच्छया ।**

यह भित्ति का विस्तार पके ईंट के लिए है, तृण व दारु गृह के लिए यह नियम नहीं है।

**द्विजादीनां गृहं कार्यं तच्छुभं स्यात्स्वदिग्गतम् ।।१४।।**

विप्रादि वर्णों के लिए पूर्वोक्त विधि से गृह का निर्माण करना चाहिए और वह अपनी-अपनी दिशाओं में ही शुभद है ॥१४॥

भौमसंख्याविषये विश्वकर्मा–

**यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः ।**
**तलैर[1]र्धाष्टमैस्तेषां कारयेद् भवनोत्तमम् ।।१५।।**
**तथार्धसप्तमैरेव विप्राणां कारयेद्गृहम् ।**
**अर्धषष्ठैः क्षत्रियाणां वैश्यानामर्धपञ्चकैः ।।१६।।**

---

१. अर्धाष्टमैरित्यत्र यथा सम्प्रदायः, अर्धम् अष्टमं येषां सप्तभौमानां ते अर्धाष्टमा इति बहुव्रीहिः, सार्धसप्तभिरित्यर्थः। एवं सर्वत्र योज्यम् ।

**त्रिभिः सार्धैश्च शूद्राणां भवनं शुभदं स्मृतम्।।**

पूर्व में प्रथमभौम की ऊँचाई दी गई है; परन्तु यहाँ राजसूर्य यज्ञ करने वाले राजाओं के लिए ७१/२ भौम (स्तर) का सद्म हो सकता है। ब्राह्मणों के ६१/२, क्षत्रियों के ५१/२, वैश्यों के ४१/२, शूद्रों के ३१/२ भौम तक ही उच्छ्रिति शुभद व उचित है ॥१४-१६॥

अत्रैव मन्दबुद्धीनां कृते विश्वकर्मण उक्तिः—

तत्रोच्छ्रितौ हस्तप्रमाणम्—

**साधारणेन हस्तेन परं शूद्रस्य विंशतिः।**
**चत्वारिंशच्च वैश्यानां षष्टिः स्यात्क्षत्रियस्य च।।१७।।**
**ब्राह्मणस्य तथाऽशीतिः शतं च नृपतेः स्मृतम्।**
**नातः परतरं नृणामूर्ध्वमानं विधीयते।।१८।।**
**गन्धर्वसिद्धयक्षाणां धर्मतः समुदाहृतम्।।१९।।**

सामान्य प्रचलित हाथ से विंशति (बीस) हाथ की ऊँचाई शूद्र, ४० हाथ वैश्य, ६० हाथ क्षत्रिय, ८० हाथ ब्राह्मण व १०० हाथ राजा के गृह की ऊँचाई होनी चाहिए। मानव गृह की उक्त मान से अधिक ऊँचाई शुभद नहीं है; परन्तु गन्धर्व, सिद्ध व यक्षों के गृहों की ऊँचाई ९ भौम से भी अधिक हो सकती है ॥१७-१९॥

**।। इति रेखाकरणं नाम चतुर्दशतमं सोपानम् ।।**



# अथ चयनं नाम पञ्चदशतमं सोपानम्

सूत्रधारः–

**इदानीमभिधीयन्ते चयस्येह गुणाऽगुणाः ।**
**सुविभक्तः समश्चारुश्चतुरस्रश्च यः शुभः ।।१।।**
**असम्भ्रान्तमसन्दिग्धमविनाश्यं बहिर्गतम् ।**
**अनुत्तममनुद्वृत्तमकुब्जं न च पीडितम् ।।२।।**
**समानखण्डमृज्वन्तमन्तरङ्गं तथैव च ।**
**सुपार्श्वं सन्धिसुश्लिष्टं सुप्रतिष्ठं सुगन्धि च ।।३।।**
**अजिनं चेति चेयस्य गुणा विंशतिरित्यपि ।**
**एतेषां वैपरीत्येन दोषाणामपि [illegible]शतिः ।।४।।**

अब दीवार की चुनाई के गुण व अवगुण का [illegible]रण प्रस्तुत करते हैं सुविभक्त (समान विभक्त) बराबर, सुन्दर और चौकोर चुनाई शुभ मानी गई है। असम्भ्रान्त (दृष्टिपथ में भ्रमरहित), असंदिग्ध (किसी भी भाग में सन्देह न हो), अन्य बहिर्गत भाग (दिशा से बाहर न हो), अनुत्तम, अनुद्वृत्त, ऊँच-नीच दोषरहित, अकुब्ज, दिग्भ्रान्त, अपीडित, बाधारहित, समान खण्ड (विभागों की समानता), ऋजु (सीमा की अवक्रता), अन्तरंग, सुपार्श्व, सन्धिरहित, सुश्लिष्ट, सुप्रतिष्ठ, सुगन्धि (मनोरम), अजिह्म वक्रत्वरहित ये बीस चय के गुण हैं, इसके विपरीत दोष भी बीस है ॥१-४॥

चयदोषफलम्–

**दक्षिणन्तु यदा कुड्यं विचिनोति बहिर्मुखम् ।**
**तदा व्याधिभयं विद्यान्मृत्युदण्डं च निर्दिशेत् ।।५।।**
**पश्चिमन्तु यदा कुड्यं विचिनोति बहिर्मुखम् ।**
**धनहानिस्तदा विद्याद् दस्युभ्यश्च भयं भवेत् ।।६।।**

चुनाई में यदि दीवार दक्षिण दिशा में बढ़ जाय, अर्थात् दीवार का कोई भी भाग दक्षिणाभिमुख हो जाय, तो व्याधि व मृत्यु का भय है। पश्चिमाभिमुख वृद्धि से धन की हानि व दस्यु-भय होता है ॥५-६॥

**उत्तरन्तु यदा कुड्यं विचिनोति बहिर्मुखम् ।**
**कर्तारं स्वामिनं वापि व्यसनं प्रापयेत्तदा ।।७।।**
**प्राच्यं बहिर्मुखं कुड्यं चुनोति स्थपतिर्यदा ।**
**राजदण्डभयं तत्र निर्देष्टव्यं विचक्षणैः ।।८।।**

उत्तर दिशा की वृद्धि (उत्तरोन्नत) स्थपति या गृहस्वामी के दुःख का कारक है, पूर्व की दिशा में बहिर्मुख है तो राजदण्ड का भय है ॥७-८॥

**एतदेव फलं ब्रूयात्पतिते दलिते तथा।**
**यस्य प्राग्दक्षिणः कर्णः प्रवर्तेत बहिर्मुखः ।।९।।**
**स्यात्तत्राग्निभयं घोरं गृहभर्तुर्न संशयः।**
**गच्छेद्बहिर्मुखः कर्णः यदा दक्षिणपश्चिमः ।।१०।।**
**कलहोपद्रवस्तत्र स्याद्भार्यायाश्च संशयः।**
**पश्चिमोत्तरकर्णे तु सम्प्रयाते बहिर्मुखे।।११।।**
**पशु—वाहन—पुत्राणां संशयस्तत्र जायते।**
**प्रागुत्तरो यदा कर्णः प्रचीयेत बहिर्मुखः ।।१२।।**
**गुरूणां संशयस्तत्र गोवृषादेश्च जायते।**
**विशालं यदि जायेत सर्वबाहुषु चिन्वतः ।।१३।।**

जो वक्रत्व व बहिर्मुख का फल है, वही दीवार के फटने व सम्पन्न होकर गिर जाने का भी फल है, अर्थात् गिरना व फटना भी अशुभ है। यदि अग्निकोण (दीवार का) बहिर्मुख होता है, तो भयंकर अग्निभय व गृहस्वामी के जीवन का संकट है। नैऋत्यकोण के बहिर्मुख होने पर विवाद, उपद्रव व स्त्री को भी कष्ट होता है। वायव्यकोण की वृद्धि से पशु, वाहन और पुत्रों के लिए जीवन संदिग्ध रहता है। ईशानकोण की वृद्धि से गुरुजनों, गाय व बैलों का जीवन संदिग्ध है ॥९-१३॥

**कर्णिकासमसंस्थानं तद्भवेन्मल्लिकाकृतिः।**
**न तादृशो भवेदायस्तत्र यादृग्व्ययो मतः।।**
**चयस्य तस्य दोषेण गृही क्षीणः पलायते।।१४।।**

वह चुनाई में विशाल होने पर कर्णिका जैसी मल्लिका की आकृति होती है[१], उसमें व्यय की अपेक्षा आय की न्यूनता से अर्थहीन गृही घर छोड़कर भाग जाता है ॥१४॥

**चिन्वतो यदि संक्षिप्तमत्यर्थं तत्र जायते।।१५।।**
**ब्रह्मसंज्ञं तदुद्दिष्टं तत्र राजभयं भवेत्।**
**विस्तृतं यदि बाह्येषु संक्षिप्तं चैव मध्यतः।।**
**तनुमध्यं तदुद्दिष्टं तत्र विद्यात् क्षुधाभयम्।।१६।।**

१. चारों दीवार के कोणों की चुनाई यदि बढ़ जाय तो उससे कर्णिका के समान संस्थान होता है, उसे मल्लिका नाम की चुनाई कहते हैं।

यदि चुनाई करते समय (ईंट दिखाई देने लगें) संक्षिप्त हो, तो उसे ब्रह्म कहते हैं, उसमें राजभय और बाहर में वृद्धि व मध्य संक्षिप्त हो, तो उसे तनुमध्य कहते हैं, उसमें क्षुधा-भय होता है ॥१५-१६॥

**उच्छ्रितं यदि कर्णेषु परिहीणं च मध्यतः।**
**निर्णतं नाम तद्विद्यात्तत्र चौरभयं भवेत्।।१७।।**

चुनाई करते समय कोणों के उपरिभाग में वृद्धि और मध्यभाग क्षीण हो तो वह वास्तु निर्णत नाम का होता है, जो चोरभय देता है ॥१७॥

**कर्णेषु परिहीनेषु चोच्छ्रितं चापि मध्यतः।**
**कूर्मोन्नतमिति ज्ञेयं सर्वदोषभयावहम्।।१८।।**

कोणों के ऊपर व नीचे का भाग क्षीण व मध्य का भाग उन्नत हो, उसे कूर्मोन्नत कहते हैं, वह सर्वदोष का जनक, सर्वोपद्रवमूलक है ॥१८॥

**विषमोन्नतकर्णेषु निर्दिशेद् द्रविणक्षयम्।।१९।।**
**प्राज्यान्नपानं तद्विद्यात् समेषु विहितेषु च।**
**इत्येते चीयमानस्य गुणदोषाः प्रकीर्तिताः।।२०।।**
**तस्मात् सर्वप्रयत्नेन चयकर्म प्रयोजयेत्।**
**उदकेन समं नीत्वा सम्यक् निश्चयकारणम्।।२१।।**

विषमोन्नत कोणों में द्रविण (धन) की हानि होती है। कोणों की चुनाई समान बराबर होने पर भक्ष्य-भोज्य व पान वस्तुओं की पर्याप्त उपलब्धि होती रहती है। इस प्रकार चय के गुण व दोषों का विवरण दिया गया है। अतः पूर्ण सावधानी से जलवत्समीकृत बराबर चुनाई करना ही सर्वगुणों का आगार होता है ॥१९-२१॥

**।। इति चयनं नाम पञ्चदशतमं सोपानम् ।।**



# अथ द्वारकरणं नाम षोडशतमं सोपानम्

**गृहे वेशमनि मुख्यद्वारकरणे वर्ण-मास-नक्षत्र-आयमधिकृत्य मुख्यद्वारं विधेयमिति यथाशास्त्रम् ।**

रामः–

**अथ द्वारं द्विज–वैश्य–शूद्र–नृपराशीनां हितं पूर्वतः ।।**

मुख्यद्वार ब्राह्मणवर्ण की राशियों के लिए पूर्वदिशा का शुभ होता है और वैश्य वर्ण की राशियों के लिए दक्षिण, शूद्र वर्ण की राशियों के लिए पश्चिम व नृप वर्ण (क्षत्रिय) की राशियों के लिए उत्तर मुख द्वार शुभ होता है।

सौरमासानुसारं श्रीपतिः–

**कर्कनक्रहरिकुम्भगतेऽर्के पूर्वपश्चिममुखानि गृहाणि ।**
**मेषतौलिवृषवृश्चिकयाते दक्षिणोत्तरमुखान्यपि कुर्यात् ।।१।।**

कर्क-नक्र-मकर-सिंह-कुम्भ राशि के सूर्य में पूर्व व पश्चिम दिशा में तथा मेष-तुला-वृष-वृश्चिक राशिगत सूर्य में दक्षिण व उत्तरदिशा का द्वार प्रशस्त है ।।१।।

निषेधवाक्यञ्च तत्रैव–

**अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधननाशमश्नुते ।**
**मीनचापमिथुनागते सति कारयेन्न गृहमेव भास्करे ।।२।।**

प्रथम श्लोकोक्त द्वार-विधान के विपरीत नियमों में द्वार करने पर दुर्बुद्धि-रोग-शोक व धन का नाश होता है। यथा मिथुन-धनु व मीन राशि के सूर्य में गृहारम्भ व द्वार करना निषिद्ध है ।।२।।

जगन्मोहने च–

**सिंहे तु पश्चिमे द्वारं वृषभे चोत्तरं तथा ।**
**कुम्भे च पूर्वदिग्द्वारं वृश्चिके चैव दक्षिणे ।।३।।**

श्लोक द्वितीय की अपेक्षा इसमें स्पष्टोक्ति है। यथा सिंह राशिस्थ सूर्य में पश्चिम, वृष में उत्तर, कुम्भ में पूर्व, वृश्चिक में दक्षिण द्वार शुभ है ।।३।।

**मकरे पश्चिमे द्वारं तुलायां चोत्तरे तथा ।**
**कर्कटे पूर्वदिग्द्वारं मेषस्थे दक्षिणे रवौ ।।४।।**

मकर के सूर्य में पश्चिम, तुला में उत्तर, कर्क में पूर्व, मेष में दक्षिण द्वार शुभ है ।।४।।

**एवं कृते भवेद्वेश्म शोभनं सौख्यवर्द्धनम्।।५।।**

इस प्रकार उपर्युक्त नियमों के अनुसार विहित वेशमद्वार शुभ व सुख का वर्द्धक है ॥५॥

पुनर्निषिद्धवचनञ्च ग्रन्थान्तरे–

**मेषे वृषे च सूर्ये तु पूर्वद्वारं न शोभनम्।**
**कर्काटके च सिंहे वा याम्यद्वारं न शोभनम्।।६।।**
**तुलायां वृश्चिके चैव वर्ज्यं द्वारं तु पश्चिमे।**
**सूर्ये मकरकुम्भस्थे सौम्यद्वारं तु निन्दितम्।।७।।**

सौरमास के अनुसार मेष-वृष के सूर्य में पूर्व द्वार, कर्क–सिंह में दक्षिण द्वार, तुला-वृश्चिक के सूर्य में पश्चिम व मकर-कुम्भ के सूर्य में उत्तर द्वार निषिद्ध है ॥६-७॥

**विशेष–** विधि-निषेध वाक्यों का समन्वय करके निर्विरोध राशिस्थ प्रशस्त सूर्य में स्वबुद्ध्या शुभ समयानुकूल द्वार करने का निर्देश किया जाय।

पूर्वोक्तद्वारविधौ निष्कर्षस्तत्र रामः–

**कृत्तिकायास्तु पूर्वादौ सप्तसप्तोदिताः क्रमात्।**
**यद्दिश्यं यस्य नक्षत्रं तत्र तस्य गृहं शुभम्।।८।।**

कृत्तिका से सात-सात नक्षत्रों का वास पूर्वादि दिशाओं में क्रम से रहता है। ग्राम, नगर प्रभृति में अपने-अपने नक्षत्रों की दिशा में निवास बनाना श्रेयस्कर है तथा प्रसङ्गानुसार सम्मुख व पृष्ठ की दिशा के नक्षत्रों में द्वार निषिद्ध है, सम्मुखस्थ में उद्वास,पृष्ठस्थ द्वार में चोरी होती है। ***यथोक्तं पूर्वम्–*** कर्तुः स्थितिर्नो विधुवास्तुनोर्भे, पुरःस्थिते पृष्ठगते खनिः स्यादिति ॥८॥

आयानुसारं च द्वारं व्यवहारतत्त्वे–

**ध्वजेऽशिवभे प्राक्पराख्यं गृहं स्याद् उदग्दक्षिणस्यान्तु मैत्राभिधे सत्।**
**हरौ याम्यसौम्यास्यमैन्द्राहिमैत्रे ध्वजाशिवद्विभे पित्र्यभे प्राङ्मुखञ्च।।९।।**

आयसम्बन्धिनक्षत्राणि च तत्रैव–

**वृषे वाजिपित्र्यत्रिभे चाश्वियुग्मे गजेऽङ्घ्रिभात् पञ्चके पित्र्यभञ्च।**
**ततो दिङ्मुखं मित्रभात्षट्सु सार्पे चतुष्केऽग्निभादन्यथाऽनर्थकृत्स्यात्।।१०।।**

शतभिषा, मघा, पूर्वाफाल्गुनी, अश्विनी, भरणी ये नक्षत्र ध्वज आय के हैं। पूर्वाभाद्रपद, उत्तराभाद्रपद, रेवती, अश्विनी, भरणी, मघा ये नक्षत्र गज आय के हैं। अनुराधा, ज्येष्ठा, मूल, पूर्वाषाढ़, उत्तराषाढ़, अभिजित्, श्लेषा, कृत्तिका, रोहिणी, मृगशिरा, आर्द्रा ये नक्षत्र पूर्व के दिग्द्वारभ हैं, इनके विपरीत दिशा का द्वार अनर्थकारी है ॥९-१०॥

**विशेष–** पूर्वोक्त कृत्तिका से सात-सात नक्षत्रों की जो पूर्वादि दिशायें हैं, उनके ही अनुसार जो नक्षत्र जिस दिशा का हो, उसे उसी दिशा का दिग्द्वारभ मानना चाहिए। शेषार्थ पूर्वोक्त दोनों श्लोक अप्रामाणिक प्रतीत होते हैं; क्योंकि इनकी व्यवस्था सन्दिग्ध है ।

श्रीपतिश्च–

**क्षपाकरे नैव गृहं पुरस्थे कुर्याद्वसेन्नैव तु जातु कर्ता ।**
**जातानि खान्यानि च पृष्ठसंस्थे यत्नेन तस्मादिदमत्र चिन्त्यम् ।।११।।**

पूर्वोक्त से अनुकूल होने पर भी प्रसङ्गवश उपयोग होने से पुनः प्रतिपादन किया जा रहा है। पूर्वादि दिशाओं में कृत्तिकादि सात-सात नक्षत्रों को दिग्द्वार कहते हैं, इनके सम्मुख व पृष्ठ के नक्षत्रों में गृह का द्वार करना निषिद्ध है, सम्मुख में उद्वास व पृष्ठ में चोरी होती है ॥११॥

अत्रैव ब्रह्मशम्भुश्च–

**[1]धनलाभः प्रवासः स्यादायुश्चौरभयं क्रमात् ।**
**दक्षाग्रवामपृष्ठस्थे गृहकर्तुर्निशाकरे ।।१२।।**

यह पूर्व श्लोक ११ से सम्बन्धित है। दाहिने वाले दिग्द्वार नक्षत्रों में मुख्य द्वार धनलाभकारक, सम्मुखस्थ नक्षत्रों में प्रवास, वामदिक् नक्षत्रों में आयुष्य की वृद्धि व पृष्ठभागस्थ नक्षत्रों में चोरभय निश्चित है ॥१२॥

कोणद्वाराभीष्टे सति कर्तव्यं तत्रैव–

**भानामपि तथैव स्यादधिकं च तदन्तरे ।**
**धननाशो मृतिर्व्याधिरविनाशो विलोमतः ।।१३।।**

पूर्वादि दिशाओं के नक्षत्रों को ही विपरीत वामावर्त कोणों में समझना चाहिए, जैसा कि पूर्व के नक्षत्रों को ईशान, उत्तर के नक्षत्रों को वायव्य, पश्चिम के नक्षत्रों को नैर्ऋत्य व दक्षिण के नक्षत्रों को अग्निकोणीय समझे, फल पूर्वश्लोकानुसार ही है। यथा दाहिने के नक्षत्रों में कोणीय द्वार धनलाभ, सम्मुखस्थ नक्षत्रों में विनाश, पीछे के नक्षत्रों में मृत्यु व वाम नक्षत्रों में वृद्धि (अविनाश) होती है ॥१३॥

सप्तशलाकाचक्रेण दिग्द्वारनक्षत्राणि ग्रन्थान्तरे–

**शलाकासप्तके देयं कृत्तिकादित्रयेण च ।**
**वामदक्षिणभागन्तु प्रशस्तं शान्तिकारकम् ।।१४।।**

१. उक्त दिशा के द्वार के गृह का विषय है ।

**अग्रे पृष्ठे न दातव्यं यदीच्छेच्छ्रेयमात्मनः ।**
**ऋक्षं चन्द्रस्य वास्तोश्च ह्यग्रे पृष्ठे न संशयः ।।१५।।**

कृत्तिकादि सात-सात नक्षत्रों को पूर्वादि दिशाओं में दिया जाय, उनमें वाम व दक्षिण भाग के नक्षत्रों में किये गये द्वार का गृह प्रशस्त, शान्तिकारक होता है। सम्मुख व पृष्ठ के नक्षत्रों में अपना श्रेय चाहने वालों को द्वार नहीं करना चाहिए। यद्यपि पूर्वोक्त भी है; किन्तु प्रकरण व आवश्यक होने से स्मरणार्थ पुनरुक्ति होती रहती है ।।१४-१५।।

## सप्तशलाकाचक्रम्

**पूर्व**

कृ रो मृ आ पुन पु श्ले

उत्तर: भ, अ, रे, उ.भा, पू.भा, श, ध

दक्षिण: मघा, पू.फा, उ.फा, हस्त, चित्रा, स्वाती, विशाखा

श्र अभि. उ.षा. पू.षा. मू. ज्ये. अनु.

**पश्चिम**

द्वारविषये सौरचान्द्रमासैकवाक्यतावशेन दिग्द्वारकरणे रामः–

**कुम्भेऽर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्कयोः**
**पौषे नक्रे च याम्योत्तरमुखसदनं गोऽजगेऽर्के चराद्ये ।**
**मार्गे जूकालिगे सद्ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यैः**
**सूतीगेहं त्वदित्यां हरिभविधिभयोस्तत्र शस्तः प्रवेशः ।।१६।।**

रामाचार्य पृथक् सौर-चान्द्रमास प्रतिपादित वाक्यों का समन्वय करके निर्णयात्मक ऐक्यता का प्रतिपादन करते हैं, जो सारगर्भित निर्णय है। यथा फाल्गुन में कुम्भ, श्रावण में सिंह व कर्क, पौष में मकर के सूर्य में पूर्व व पश्चिम मुख का गृहारम्भ करना चाहिए और वैशाख में मेष, वृष, मार्गशीर्ष में तुला व वृश्चिक सूर्य में दक्षिण व उत्तर द्वार का गृह बन सकता है। यहाँ मात्र द्वारकरण के प्रतिपादन से मुख्य प्रयोजन है। शेष प्रारम्भ व प्रवेश सम्बन्धी वाक्य पूर्वोक्त है ॥१६॥

आयसम्बन्धे रामः–

**ध्वजादिकाः सर्वदिशि ध्वजे मुखं कार्यं हरौ पूर्वयमोत्तरे तदा ।**
**प्राच्यां वृषे प्राग्यमयोर्गजेऽथवा पश्चादुदक्पूर्वयमे द्विजादितः।।१७।।**

ध्वजादिका आया भवन्ति इति पूर्वसम्बन्धः ।

ध्वज आय के गृह का मुख्य द्वार सभी दिशा में प्रशस्त होता है। (हरि) सिंह में पूर्व-उत्तर व दक्षिण दिशा में, वृष में पश्चिम, गज में पूर्व व दक्षिण द्वार गृह होना चाहिए और वर्णों के अनुसार पश्चिम ब्राह्मण, उत्तर क्षत्रिय, पूर्व वैश्य व दक्षिण मुख्यद्वार शूद्र के लिए शुभ है ॥१७॥

तिथिमुद्दिश्य मुख्यद्वारे रामः–

**पूर्णेन्दुतः प्राग्वदनं नवम्यां दिश्युत्तरस्यां त्वथ पश्चिमास्यम् ।**
**दर्शादितः शुक्लदले नवम्यादौ दक्षिणस्यां च शुभं वदन्ति ।।१८।।**

पूर्णिमा से कृष्ण अष्टमी तक पूर्वमुख, कृष्ण नवमी से कृष्ण चतुर्दशी तक उत्तरमुख, अमा से शुक्ल अष्टमी तक पश्चिममुख व शुक्ल नवमी से शुक्ल चतुर्दशी तक दक्षिण द्वार शुभ है । उपर्युक्त द्वार नियमों में जो भी समय-स्थान व सुविधा के अनुसार उपलब्ध हो सके, उसके अनुसार मुख्य द्वार शुभ होता है ॥१८॥

**विशेष–** यद्यपि सभी तिथियों का वर्णन है; परन्तु उनमें जो तिथि आरम्भ में (उपयुक्त) पठित है, उसी के अनुसार उक्त तिथियों का ही व्यवहार करना चाहिए, निषिद्ध तो निषिद्ध है ।

द्वारविषये नारायणः –

**प्राहुः प्राङ्मुखमन्त्य-वृश्चिक-कुलीराणां प्रचेतोमुखं**
**जूकोपान्त्यगवां यमास्यमबला–युग्मैणकानां हितम् ।**
**सौम्यास्यं गृहमाद्यसिंहधनुषामत्रेष्टकाष्ठाननं**
**कृत्वाप्तान्यककुप् गवाक्षवदनं तत्कार्यमास्यं न सत् ।।१९।।**

श्रीनारायण भट्ट के अनुसार मीन-वृश्चिक-कुलीर राशि वालों के लिए पूर्व, तुला-कुम्भ-वृष राशि वालों के लिए पश्चिम, मिथुन-कन्या-मकर राशि वालों के लिए दक्षिण व मेष-सिंह-धनु राशि वालों के लिए उत्तर मुख मुख्य द्वार शुभ है, अन्य प्रकार से प्राप्त दिशाओं में गवाक्ष करना चाहिए और अभीष्ट दिशा जो अनुकूल विहित हो, उसी दिशा में मुख्य द्वार किया जाय। विहित के विरुद्ध द्वार या गवाक्ष कुछ भी करना उचित नहीं है ॥१९॥

**दिंनकरकिरणक्रान्तर्क्षतो द्वारचक्रे युगयमयुगदृग्वेदद्विरामैः।**
**मितमुडुगणभागं विन्यसेदूर्ध्वतोऽन्तर्नियमतोऽन्त-**
**र्नियमाखिलदिगाप्यभे कोणभंसत्॥२०॥**

## अथ द्वारकरणमुहूर्तचक्रं सूर्यभात्
## ग्रन्थान्तरात्

| नक्षत्र-संख्या | ४ | २ | ४ | २ | ४ | २ | ४ | २ | ३ |
|---|---|---|---|---|---|---|---|---|---|
| फल | राज्य-लाभ | हानि | धन-प्राप्ति | भय | मृत्यु-भय | मृत्यु | द्रव्य-प्राप्ति | शोक | धन-लाभ |

चुल्लीचक्रं सूर्यभाद् ग्रन्थान्तरे-

**सूर्यभात्षड्वेदाष्ट-रामशत्रु-शुभाऽशुभम्।**
**चुल्लीचक्रे क्रमाज्ज्ञेयं शुभाऽशुभं विचक्षणैः॥२१॥**

## चुल्ली-चक्रम्

| ६ | ४ | ८ | ३ | ६ | नक्षत्र-संख्या |
|---|---|---|---|---|---|
| शुभ | अशुभ | शुभ | अशुभ | शुभ | फल |

नूतनगृहे मार्जनीचक्रं सूर्यभाद् ग्रन्थान्तरे-

**सूर्यभाद्रामरामाङ्ग-रामतर्काङ्गभेषु च।**
**असच्छुभं क्रमाज् ज्ञेयं मार्जनीचक्रसंज्ञके॥२२॥**

सूर्य-नक्षत्र से ३।३।६।३।६।६ ये नक्षत्र क्रम से अशुभ व शुभ हैं ॥२०-२२॥

## मार्जनीचक्रम्

| | | | | | | |
|---|---|---|---|---|---|---|
| ३ | ३ | ६ | ३ | ६ | ६ | नक्षत्र-संख्या |
| अशुभ | शुभ | अशुभ | शुभ | अशुभ | शुभ | फल |

द्वारशाखारोपणचक्रं सूर्यभाद् रामः—

**सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभै-**
**र्नगैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भवेत्।**
**देहल्यां गुणभैर्मृतिर्गृहपतेः शेषेषु सौख्यं वदेत्**
**सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं शुभम्।।२३।।**

**प्रसङ्गाद्देहलीचक्रम्—**

| | | | | | |
|---|---|---|---|---|---|
| ४ | ८ | ८ | ३ | ४ | सूर्यनक्षत्र से चन्द्रनक्षत्र की संख्या |
| लक्ष्मी प्राप्ति | उद्वसन | सौख्य | मृत्यु स्वामी | स्थान सुख | फल |
| शिर | कोण | शाखा | देहली | मध्य | स्थान |

**मूले भौमं त्रिऋक्षं गृहपतिमरणं पञ्चगर्भे सुखं स्याद्**
**मध्ये देयाष्टऋक्षं धनसुखसुखदं पुच्छदेशेऽर्थहानिः।**
**पश्चाद्देयाष्टऋक्षं गृहपतिसुखदं भाग्यपुत्रार्थदियं**
**सूर्यर्क्षाच्चन्द्रऋक्षं प्रतिदिनगणयेद्भौमचक्रं विलोक्यम्।।२४।।**

कपाटचक्रं मुहूर्तकल्पद्रुमे—

**सूर्यर्क्षाद्युग—नागाष्ट—गुणवेदैः शुभाऽशुभम्।**
**शिरसि कोणशाखासु देहलीमध्यगैः क्रमात्।।२५।।**

इदं पूर्वोक्तशाखाचक्रसमं स्पष्टम् ॥२३-२५॥

उपर्युक्तकार्येषु नक्षत्राणि—

**अश्विनीमुत्तराहस्त—पुष्य—श्रुति—मृगेषु च।**
**रोहिण्यां स्वातिभे चैव द्वारशाखाप्ररोहणम्।।२६।।**

स्पष्टम् ॥२६॥

अत्रैव गुरुः–

**ध्रुवभे शुभवारे च स्थिरलग्ने शुभे तिथौ।**
**द्वारि स्थाप्योऽमृतं चित्रं वर्गसम्पद्विवर्धकम्।।२७।।**
**चरस्थिरे च नक्षत्रे बुधशुक्रदिने तिथौ।**
**शुभे कपाटयोगे तद् द्विस्वभावोदये गृहम्।।२८।।**

मुहूर्तमुक्तावल्याम्–

**भवेत्पूषणीमैत्रपुष्ये च शाक्रे करे दस्रचित्रानिले चादितौ च ।**
**गुरुश्चन्द्रशुक्रार्कसौम्ये च वारे तिथौ नन्दपूर्णा जया द्वारशाखा ।।२९।।**

वास्तुसौख्ये माण्डव्यः–

**सूत्रशङ्कुशिला–द्वार–तुलाच्छादनपूर्वकम् ।**
**कार्यं स्तम्भप्रतिष्ठोक्ते धिष्णे वारे तिथौ तथा।।३०।।**

सूत्र प्रसारण-शङ्कुस्थापन-शिलान्यास-द्वारकरण-द्वारशाखास्थापन-तुला-स्थापन प्रभृति समस्त कार्य स्तम्भ में कथित तिथि-वार-नक्षत्रों में भी शुभ होते हैं ॥२७-३०॥

ज्योतिःप्रकाशे–

**अस्तदोषोऽत्र न ग्राह्यः प्रतिदैवसिको बुधैः ।**
**नास्तदोषः सदा भानोर्न मैत्रेन्दोश्च नीचता।।३१।।**

प्रतिदैनिक कार्यों में अस्त-दोष नहीं होता है । सूर्य का अस्तदोष व अनुराधा में चन्द्रमा का नीचदोष नहीं होता है ॥३१॥

सर्वकार्यारम्भे मुहूर्तः, ग्रन्थान्तरे–

**अदितिक्षिप्रमृदुध्रुवसंज्ञके भृगुजवाक्पतिपूर्णजयातिथौ ।**
**शकटनावसुखासनशिल्पकं भ्रमणकाष्ठरहांटकसिद्धिदम्।।३२।।**

पुनर्वसु-हस्त-अश्विनी-पुष्य-अभिजित्-मृगशिरा-रेवती-चित्रा-अनुराधा-तीनों उत्तरा-रोहिणी ये नक्षत्र,जया व पूर्णा तिथि,बुध-गुरु-शुक्र के दिन में घूमने वाले सभी यन्त्र चक्रियाँ-रहट-चुह्नी-गाड़ी-नाव-आसन-चारपाई-चौकी-शिल्पकार्य व द्वारशाखा रोपण पञ्चक छोड़कर शुभ होता है ॥३२॥

राजप्रभृतीनां द्वारोच्छ्रितिः–

**एकादशभागयुतः सप्ततिर्नृपबलेशयोर्व्यासः ।**
**उच्छ्रायाङ्गुलतुल्यो द्वारस्यार्धेन विष्कम्भः ।।३३।।**

राजा, सेनापति व वर्णेतर अन्य जातियों के लिए अपने-अपने गृहों के विस्तार (चौड़ाई) के ग्यारहवें भाग को सत्तर में जोड़ने से जो संख्या होगी, उसके तुल्य गृहों के मुख्य द्वार की ऊँचाई होनी चाहिए। अर्थात् विस्तार का ग्यारहवाँ भाग अंगुलात्मक होगा, उसमें ७० अंगुल जोड़ने से जो मान आयेगा, उतना ही अंगुल द्वार की ऊँचाई होगी व ऊँचाई के आधे के बराबर चौड़ाई होगी ।

**उदाहरण–** विस्तार × $\frac{\text{विस्तार}}{११}$ + ७० अंगुल द्वारोच्छ्रिति

राजगृह की विस्तार संख्या १०८ है। इसका एकादशवाँ भाग = $\frac{१०८}{११}$ = ९ हाथ व १९ अंगुल है ।

स्वल्पान्तर से इसे विस्तार व सत्तर अंगुल में जोड़ने से -१०८+(९। १९) +७० अं = १८७ हाथ १९ अंगुल हुआ। स्वल्पान्तर से १८८ हुआ, यही उक्त व्यक्तियों के द्वार की उच्छ्रिति होगी और इसका आधा ९४ अंगुल विस्तार द्वार की चौड़ाई होनी चाहिए ॥३३॥

अत्रैवोत्पलः–

**अष्टाशीतिसहितं शतं वा अष्टाशीत्यधिकशतं नृपद्वारोच्छ्रितिरिति ।**

वर्णानां कृते तु तत्रैव–

**विप्रादीनां व्यासात्पञ्चांशोऽष्टादशाङ्गुलसमेतः ।**
**साष्टांशो विष्कम्भो द्वारस्य त्रिगुण उच्छ्रितिः ।।३४।।**

ब्राह्मण-क्षत्रिय-वैश्य व शूद्र के द्वार का प्रमाण विस्तार के पंचमांश से युक्त अष्टादश अंगुल व अपने अष्टमांश से युक्त मुख्य द्वार का विस्तार होना चाहिए व उसकी त्रिगुणित संख्या उच्छ्रिति होगी ॥३४॥

**उदाहरण–**

ब्राह्मण-गृह का विस्तार = ३२

$\frac{३२}{५}$= ६स्वल्पांन्तर से। १८ + ६ =२४ अंगुल। $\frac{२४}{८}$ =३।२४+३ =२७

= अंगुल विस्तार व २७ × ३ = ८१ अंगुल दीर्घ होना चाहिए। इसी प्रकार शेष वर्णों का भी होगा ।

द्वार-विस्तार = $\frac{\text{व्यास}}{५}$ + १८ + $\frac{\text{व्यास}/५+१८}{८}$ इति = २७ ब्राह्मण का

ऊँचाई = $\frac{\text{व्यास}}{५}$ + १८ + $\left(\frac{\text{व्यास}/५+१८}{८}\right) \times ३$ दीर्घ = ८१।

औदुम्बरद्वारशाखाप्रमाणे वराहः–

**उच्छ्रायहस्तसंख्यापरिमाणान्यङ्गुलानि बाहुल्यम्।**
**शाखाद्वयेऽपि कार्यं सार्धं तत्स्यादुदुम्बरयोः।।३५।।**
**उच्छ्रायात्सप्तगुणादशीतिभागः पृथुत्वमेतेषाम्।**
**नवगुणितोऽशीत्यंशः स्तम्भस्य दशांशहीनोऽग्रे।।३६।।**

द्वारशाखा की उच्छ्रिति के अंगुल का जो हाथ माप होगा, उतना ही अंगुल के बराबर द्वार की दोनों शाखाओं का घनत्व (ऊँचाई) होगा और शाखा का घनत्व स्वार्धयुक्त द्वार के ऊपर व नीचे के काष्ठों का घनत्व होगा, जिसे उदुम्बर कहते हैं; किन्तु नीचे के काष्ठ को देहली भी कहते हैं। एवं स्तम्भ की आकृति का लक्षण आगे कहा जायेगा। द्वारोच्छ्रिति गुणित सात का ८०वाँ भाग के बराबर उपर्युक्त सभी काष्ठों का पृथुत्व (चौड़ाई) होगा ।।३५-३६।।

**उदाहरण–**

राजगृह द्वार की उच्छ्रिति = १८८ अंगुल। १८८×७ ÷ ८० = १६ अंगुल २७ व्यंगुल स्वल्पान्तर से १६ अंगुल शाखा व उदुम्बरों का पृथुत्व व घनत्व राजगृह की ऊँचाई = १८८ अं. स्वल्पान्तर से = ८ हाथ माना गया है। अतः ८ अंगुल द्वारशाखा का घनत्व होना चाहिए तथा उदुम्बर का ८+(८÷२) = १२ अं. घनत्व व पूर्वोक्त नियम से शाखा के पृथुत्व के बराबर उदुम्बरों का भी पृथुत्व होना चाहिए।

शाखा के काष्ठों का [घनत्व = ८अं.] पृथुत्व१६ अं. [उदुम्बर] घनत्व१२अं.
विस्तार = १६ अं.

समचतुरस्र काष्ठ की ऊँचाई को घनत्व व चौड़ाई को पृथुत्व कहते हैं।

पूर्वोक्त विधि के अनुसार स्तम्भों की ऊँचाई प्रथम भौम (तल) के ऊँचाई के बराबर होती है। उसकी आकृति का नियम– स्तम्भ की उच्छ्रिति से गुणित नव के ८०वाँ भाग के बराबर स्तम्भ के मूल की विस्तृति होगी और वह अपने दशमांश से हीन होकर स्तम्भ के अग्र की विस्तृति होगी।

**उदाहरण–**

राजगृहोच्छ्रिति १० हाथ १८ अंगुल है।

$\frac{१०\times९ + १८\times९ \text{ अं.}}{८०} = \frac{९० \text{ हा} + १६२ \text{ अं.}}{८०} = \frac{२३२२ \text{ अं.}}{८०} =$

२९ अं. $\frac{१}{४०}$ इसके स्थान पर स्वल्पान्तर से २८ अंगुल स्तम्भ के मूल का पृथुत्व हुआ। २८ – $\frac{२८}{१०}$ = स्वल्पान्तर से २६ अंगुल स्तम्भ के अग्रभाग का पृथुत्व हुआ। यह प्रमाण राजगृहों की ऊँचाई के अनुसार हुआ, अन्यत्र भी यही प्रमाण होगा। मूल पाठ के अनुसार स्थूल प्रमाण २७ अंगुल होगा और इसका त्रिगुणित २७×३=८१ अंगुल स्तम्भ की परिधि (गोलाई) होगी। सर्वत्र स्तम्भोच्छ्रिति के अनुसार उनमें विभाग किये जाँय।

$\frac{\text{स्तम्भोच्छ्रिति} \times ९}{८०}$ = स्तम्भ मूल में विस्तार

मूल विस्तार – $\frac{\text{मूल विस्तृति}}{१०}$ = स्तम्भाग्र विस्तृति

अग्र विस्तृति × ३ = स्तम्भपरिधि = गोलाई।

एतत्सर्वं स्तम्भविषये यदुक्तं तदुपलक्षणं कर्तव्यन्तु पूर्वं "स्तम्भं विभज्य नवधा वहनं भाग" इत्यादि यदुक्तं तदेवाकृतिरेव स्तम्भस्य विधातव्यमिति दिक्।

भारतुलातुलोपतुलालक्षणे वराहः–

**स्तम्भसमं बाहुल्यं भारतुलानामुपर्यासाम्।**
**भवति तुलोपतुलानां मूलं पादेन पादेन।।३७।।**

भारतुलादीनां लक्षणे "स्तम्भस्योपरि भित्तेराधाररूपं यत्काष्ठं तिर्यग् दीयते, तद्धारं तुलानाम्ना व्यवह्रियते, यथा भारं तोलयति धारयतीति यत्तत्काष्ठं तद् भारतुलाकाष्ठमिति। भारतुलोपरि यत्काष्ठं दीयते तत्काष्ठमुपतुला इत्येवम् उपतुलोपरि यत्काष्ठं तत्तूपतुलोपतुला इति कथ्यते।।

प्रथम भारतुला का प्रमाण घनत्व व पृथुत्व स्तम्भ के अनुकूल ही होना चाहिए। अर्थात् स्तम्भ के पृथुत्व व घनत्व के समान ही प्रथम भारतुला का भी घनत्व व पृथुत्व होना चाहिए। प्रथम तुला अपने चतुर्थांश से ऊन

उपतुला का व उपतुला अपने चतुर्थांश से ऊन तुलोपतुला का घनत्व व पृथुत्व होता है ॥३७॥

**उदाहरण–**

राजगृह स्तम्भ का पृथुत्व = २८ अंगुल = इतना ही प्रथम भारतुला का घनत्व = २८ अं.। (२८-२८÷४) = उपतुला का प्रमाण = २८-७ = २१ अंगुल, २१- (२१÷४) = २१- (५।६) = १५।१८ = तुलोपतुला का घनत्व व पृथुत्व होता है ।

सफलद्वारशाखासंख्याविषये सूत्रधारः–

**आद्या शाखा भवेद्देवी द्वितीया नन्दिनीति च ।**
**तृतीया सुन्दरी नाम चतुर्थी स्यात् प्रियानना ।।३८।।**
**भद्रेति पञ्चमी शाखा प्रशस्ता ऽत्ववेश्मनि ।**
**अतोऽधिका तु या शाखा गृहद्वारि न सा शुभा ।।३९।।**

स्तम्भविषये सूत्रधारः–

**प्रासादेषु च हर्म्येषु गृहेष्वन्येषु सर्वदा ।**
**आग्नेय्यां प्रथमं स्तम्भं स्थापयेत्तद्विधानतः ।।४०।।**

द्वार की शाखाओं की पाँच संख्या होती है, अधिक संख्या शुभदायिनी नहीं है। इनके १ देवी, २ नंदिनी, ३ सुन्दरी, ४ प्रियानना, ५ भद्रा नाम हैं। प्रासाद, हर्म्य व सामान्य गृहों में भी प्रथम स्तम्भ अग्निकोण में स्थापित कर शेष प्रदक्षिणावर्त स्तम्भों को स्थापन के नियमों से स्थापित करें । प्रसङ्गवश यहाँ उद्धृत किया जा रहा है ॥३८-४०॥

द्वारशाखास्तम्भयोः सम्भाव्यमानशकुनविचारे वराहः–

**विहगादिभिरवलीनैराकम्पितपतिताऽग्रस्थितैश्च फलम् ।**
**शक्रध्वजफलसदृशं तस्मिंश्च शुभं विनिर्देश्यम् ।।४१।।**

(इन्द्रध्वज) राजभवनों के ध्वज के अनुसार यहाँ स्तम्भों एवं द्वार-शाखाओं का विचार प्रस्तुत है । ध्वज-स्तम्भ या द्वारशाखा के ऊपर अपवित्र (इन्द्रध्वजवर्णित) पक्षियों के उपवेशन,स्तम्भ के कम्पन, प्रचलित इधर-उधर प्रचालन-गिरना (भूमिपतन) अस्थिरताजन्य फल अशुभ है ॥४१॥

अत्रैव विश्वकर्मा–

**स्तम्भोपरि यदोलूक–काकगृद्धादि–पक्षिणः ।**
**व्यालादयश्च तिष्ठन्ति तदा कर्तुर्न शोभनम् ।।४२।।**

स्तम्भ या द्वारशाखा के ऊपर यदि उलूक,काक,गृद्ध प्रभृति अपवित्र पक्षी आकर बैठ जाय या सर्पादि सरीसृप प्राणियों में कोई जीव स्तम्भ पर दिखाई दें, तो गृहस्वामी के लिये अमङ्गल है ।।४२।।

तत्र कर्तव्यता–

**तस्मात्स्तम्भोपरि छत्रं शाखां फलवतीं तु वा।**
**धारयेदथवा वस्त्रं बुधै रत्नादि निःक्षिपेत्।।४३।।**

पूर्व श्लोक से सम्बन्ध होने से तस्मात् शब्द का प्रयोग किया गया है। (अर्थात् ४५ श्लोक वर्णित दोष उत्पन्न न हो) अत: स्तम्भ या द्वारशाखा के ऊपर क्षत्र या फलवती शाखा या वस्त्र से ढँक देना चाहिए और स्तम्भ या द्वारशाखा व देहली के न्यास के समय खात में पञ्चरत्नों को भी निवेशित करना चाहिए ।।४३।।

अत्रैव ग्रन्थान्तरादपि–

**क्रव्याद-कौशिक-कपोतक-कालकङ्कैः केतुस्थितैर्महदशान्तिभयं नृपस्य।**
**चाषेण चापि युवराजभयं वदन्ति श्येनो विलोचनभयं निपतन् करोति ।।४४।।**

ध्वज, स्तम्भ या द्वारशाखा के ऊपर गृद्ध, उलूक, कपोत, काक, कङ्क (चील्ह) बैठ जाय, तो राजा या गृहस्वामी के लिए भय है । नीलकण्ठ से युवराज या पुत्र तथा बाज के उपवेशन से नेत्रभय होता है ।।४४।।

वराहश्च–

**क्षत्रभङ्गपतने नृपमृत्युस्तस्करान् मधुकरोति निलीनम्।**
**हन्ति चाप्यथ पुरोहितमुल्का पार्थिवस्य महिषीमशनिश्च ।।४५।।**

छत्र, शिखर, स्तम्भ, ध्वज व द्वारशाखा के टूटने से स्वामी की मृत्यु, मधु लीन (मधुछत्र) से तस्करभय, उल्का पतन से पुरोहित की हानि, अशनि विद्युत्पात से राजमहिषी, गृहिणी की हानि होती है ।।४५।।

**राज्ञीविनाशं पतिता पताका करोति वृष्टिं पिटकस्य पातः।**
**मध्याग्रमूलेषु तु केतुभङ्गे निहन्ति पत्नीं क्षितिपालपौरान्।।४६।।**

पूर्वोक्त ध्वजादि के पतन से गृहिणी या महिषी का विनाश, पिटक के पतन से वृष्टि का भय, बीच में भङ्ग से सेना, अग्रभाग के भंग से राजा व मूल के भङ्ग से पुर के प्रधान की हानि होती है ।।४६।।

**धूमावृते शिखिभयं तमसश्च मोहो**
**व्यालैश्च भग्नपतितैर्न भवन्त्यमात्याः ।**
**म्लायन्त्युदक् प्रभृति च क्रमशो द्विजाद्यान्**
**भङ्गे च वन्धिकवधो व्यथिताः कुमार्यः ।।४७।।**

पूर्वोक्त ध्वजादिक यदि धूमाच्छादित हो जाय, तो विद्युत्पात का भय, तमःछादित होने पर मोह, सर्पाच्छादित व पतन से अमात्य गण के लिए, भङ्ग टूटने पर वन्धिक-वध व कुमारियाँ दूषित होती हैं। ग्राम या गृह के उत्तरभाग के म्लान से ब्राह्मण, पूर्व से क्षत्रिय, दक्षिण से वैश्य, पश्चिम से शूद्र प्रभृति की हानि होती है ।।४७।।

**रज्जूत्सङ्गच्छेदने बालपीडा राज्ञो मातुः पीडने मातृकायाः ।**
**यद्यत्कुर्युश्चारणा बालकानां तत्तद्भावि पापं शुभं वा ।।४८।।**

ध्वजादि के स्थिरीकरणार्थ प्रयुक्त रस्सी के टूटने पर बालपीडा, मातृकाओं के भङ्ग से राजा या गृहपति की माता को पीडा होती है, प्रातः सायं स्वतन्त्र बालकों का जो भी शुभ या पाप आचरण होता है, वैसा देश, नगर व गृह के लिए भी कहना चाहिए ।।४८।।

मुख्यद्वारस्य स्थाननिर्णये वास्तुप्रदीपः–

**नवभागं गृहं कृत्वा पञ्चभागन्तु दक्षिणे ।**
**त्रिभागमुत्तरे कार्यं शेषे द्वारं प्रकीर्तितम् ।।४९।।**

वास्तुपद में नव भाग करके ५ भाग दक्षिण व ३ भाग उत्तर छोड़ शेष भाग में मुख्य द्वार शुभ होता है। दक्षिण से दाहिना, उत्तर से वामभाग समझना चाहिए ।।४९।।

तत्रैव वामदक्षिणम्–

**मन्दिरान्निःसृतो यदि भूयाद् भागे यो दक्षिणे ।**
**स भागो दक्षिणः प्रोक्तो वामे भूयात् स वामकः ।।५०।।**

राजमार्त्तण्डे च–

**दक्षिणाङ्गः स वै प्रोक्तो मन्दिरान्निःसृतो यदि ।**
**यो भूयाद्दक्षिणे भागे वामे भूयात् स वामकः ।।५१।।**

दोनों का अर्थ समान है। घर से निकलते समय गृह का जो भाग दाहिने है, वह दक्षिण व जो वाम है, वह उत्तर होता है ।।५०-५१।।

विश्वकर्माप्यत्रैव–

**देवागारे [1]विहारे च पूजायां मण्डपेषु च।**
**प्रतोल्यायां मखे चैव मध्ये द्वारं प्रशस्यते।।५२।।**

देवगृह-विहार-पूजागृह-यज्ञमण्डप या देवमण्डप-प्रतोली व यज्ञशाला के मध्य में भी द्वार शुभ होता है ।।५२।।

ग्रन्थान्तरम्–

**द्वारं नवमभागेषु कार्यं वामात्प्रदक्षिणम्।**
**तृतीय–तुर्ययोः प्राच्यां याम्ये तुर्येऽथ पश्चिमे।।५३।।**
**त्रि–तुर्य–पञ्चमे चैव पञ्च–वेद–त्रिषूत्तरे।**
**तत्र द्वारं च कर्तव्यं धनधान्यादिवृद्धये।।५४।।**

पूर्वादि दिशाओं के वामक्रम से ८१ पद वास्तु में नव-नव भागों में पूर्व दिशा के ३,४, दक्षिण में ४, पश्चिम व उत्तर में ३, ४, ५ इन भागों में द्वार (मुख्य) धनधान्य व सन्तति वृद्धिकारक होता है। यह प्रक्रिया सभी प्रकार के मतों में निष्कर्ष है; परन्तु शुभ होते हुए भी मध्यद्वार गृही के लिए निषिद्ध है ।।५३-५४।।

वसिष्ठसंहितायां द्वारविधानम्–

**दुःखं शोको धनप्राप्तिर्नृपपूजा महद्भयम्।**
**स्त्रीजन्मापुत्रता हानिः प्राच्यां द्वारफलान्यतः।।५५।।**

श्रीवसिष्ठ-संहिता के अनुसार पूर्वादि चारों दिशाओं में आठ-आठ भाग करने से कुल ३२ द्वार होते हैं, (यह ६४ पदवास्तु के अनुसार है)। इसमें प्रत्येक भाग के द्वार का फल निम्न है— पूर्व में क्रमशः वामावर्त से दुःख, शोक, धनप्राप्ति, नृपपूजा, महद्भय, स्त्रीजन्म, अपुत्रता व हानि है ।।५५।।

दक्षिणे–

**निधनं बन्धनं भीतिः पुत्राप्तिश्च धनागमः।**
**यशो लाभश्चौरभयं व्याधिभीतिश्च दक्षिणे।।५६।।**

दक्षिण के आठ भागों में क्रमशः वामावर्त प्रत्येक भाग के द्वार का फल– निधन, बन्धन, भीति, पुत्रप्राप्ति, धनागम, यशोलाभ, चोरभय, व्याधिभय होता है ।।५६।।

१. विहारगृह, आश्रम, मठ प्रभृति शब्द प्रायः समान हैं।

हर्म्यादिमण्डपादीनां प्राकारादौ च गोपुरे।
तथा पर्वतदेशे तु वापीकूपतडागके।।६९।।
अचलं च चलं चैव द्विधा सोपानमीरितम्।
शिलाभिश्श्रेष्टकैर्वापि दारुभिः सचलं मतम्।।७०।।
सर्वैश्चैवाऽचलं प्रोक्तं क्षुद्रसोपानसंयुतम्।
सर्वेषाम्मुखभद्राणां पार्श्वे सोपानसंयुतम्।।७१।।
पार्श्वयोर्द्वारदेशे तु मुखसोपानमेव वा।
आरोहणं सर्वहर्म्ये च दक्षिण–द्वारभद्रके।।७२।।
तत्पार्श्वे पूर्वदिग्देशे सोपानं कारयेच्छुभम्।
गुह्यान्त–द्वारदेशे तु वामे सोपानसंयुतम्।।७३।।
आरभ्य देवदेवस्य प्रदर्शनमगर्हितम्।
तस्माच्च मुखभद्रे तु पार्श्वे सोपानकारयेत्।।७४।।
पार्श्वयोः पृष्ठदेशे तु तत्पूर्णे पक्षपार्श्वके।
यत्र देशे तु सोपानं तत्र दोषो न विद्यते।।
प्रमुखं मुख–सोपानं न कुर्याच्छिल्पवित्तमः।।७५।।

सोपान व ऊपर का द्वार नीचे के द्वार के ठीक ऊपर उसी भित्ति में दक्षिणावर्त करना चाहिए, ऊपर चढ़ने में (मोड़ से घूमने में) दक्षिणावर्त घुमाव हो, वामावर्त नहीं; क्योंकि वामावर्त ऊपर का द्वार व सोपान निषिद्ध शेष स्पष्ट है ॥६८-७५॥

सोपानविषये तत्रैव–

वापीकूपतडागे वा परितः सोपानसंयुतम्।
चतुर्दिक्षु चतुष्कोणे चान्तरालेऽथवा पुनः।।७६।।
एवमेवं यथादेशं भद्रसोपानमेव वा।
तत्रैव श्रेष्ठदिग्देशे कुलद्वारं प्रकल्पयेत्।।७७।।

बावली-सरोवर-कूप व तालाब के चारों कोणों व चारों दिशाओं में अन्तराल व मध्य में भी यथास्थान भद्रपीठ के साथ सोपान (आरोहण के लिए) सीढी बनानी चाहिए। सीढ़ियों के बीच-बीच में चौतरे जैसे निर्मित भाग को भद्रपीठ कहते हैं। ये भद्रपीठ प्ररोहण मार्ग के बीच-बीच में होना चाहिए। इन्हीं सीढ़ियों के बीच में यथोचित स्थान में कुलद्वार होना चाहिए, जलनिकास व प्रवेशद्वार को कुलद्वार कहते हैं ॥७६-७७॥

**तत्पूर्वञ्च द्विपार्श्वे च कुर्यात्सोपानमुक्तवत्।**
**अचलं वेति सम्प्रोक्तं चलं स्थाप्यं यथेच्छकम्।।७८।।**
**द्वादशांगुलमारभ्य त्रित्र्यङ्गुलविवर्धनात्।**
**सार्द्धहस्तावसानं स्याद् नवधा विस्तृतिर्भवेत्।।७९।।**

उपर्युक्त सोपान चल व स्थिर दो प्रकार का यथासुविधा व्यवहार किया जाय। सोपान का विस्तार द्वादश अंगुल से प्रारम्भ कर तीन-तीन अंगुल की वृद्धि से ३६ अंगुल तक हो सकता है। इस प्रकार इसके १२,१५,१८,२१, २४,२७,३०,३३,३६ अंगुल विस्तार से नव भेद होते हैं ॥७८-७९॥

**एवञ्चेच्चलसोपानमचलं तत्प्रचक्षते।**
**पञ्चषडङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्।।८०।।**
**द्वादशैकादशं यावत्यधिकोत्सेधविस्तृतम्।**
**आधिक्याङ्गुलविस्तीर्णं हीनमानोदयं भवेत्।।८१।।**

चल सोपान का वर्णन किया गया है। उसके अनन्तर अचल स्थिर सोपान पाँच या छः अंगुल से प्रारम्भ कर दो-दो अंगुल की वृद्धि से सोपान की पट्टिका की ऊँचाई व चौड़ाई होनी चाहिए। इससे अधिक या हीन सोपान पट्टिका की विस्तृति व उच्छ्रिति हीनमानोदय कहलाती है, जो शुभ नहीं है ॥८०-८१॥

**सोपानपार्श्वयोर्देशे हस्तिहस्तविभूषितम्।**
**हस्तमूलविशालन्तु चोक्ताङ्गुलिभिर्मानयेत्।।८२।।**

सोपान के दोनों पार्श्व में हस्तिहस्त, हाथी के सूंड़ जैसा अवलम्बन अवरोधक अर्थात् हस्ति के सूंड़ के बराबर व तदनुकूल सोपान के स्तम्भ प्रशस्त हैं। हस्त का मान उक्ताङ्गुल समान होना चाहिए ॥८२॥

अत्रैव सूत्रधारश्च–

**नापसव्येन कुर्वीत द्वारमारोहणानि च।**
**यस्यां भित्तौ कृतं पूर्वन्तस्यामुपरि कारयेत्।।८३।।**

द्वार व सोपान वामावर्त नहीं करना चाहिए, नीचे के तल में जिस दीवार पर द्वार या सोपान है, उसी द्वार के ऊपर उसी भित्ति में द्वार करना चाहिए ॥८३॥

**।। इति वृक्षकाष्ठग्रहणं नामैकोनविंशतितमं सोपानम् ।।**

○

# अथ वास्तुपददेवतानिरूपणं नाम विंशतितमं सोपानम्

तत्रैकाशीतिपदविभागे देवतामर्मवेधनिरूपणे वराहः—

**एकाशीतिविभागे दश दश पूर्वोत्तरायता रेखाः।**
**अन्तस्त्रयोदशसुरा द्वात्रिंशद्बाह्यकोष्ठस्थाः ।।१।।**

पूर्वापर व याम्योत्तर दश-दश रेखा बनाने पर बीच में ८१ पद स्थानीय एकाशी देवता होते हैं, जिसमें अन्तर्मध्य के १३ भागों में व बाह्य के भागों में बत्तीस देवता रहते हैं ।।१।।

देवाधिवासस्तत्रैव—

**शिखि-पर्जन्य-जयन्तेन्द्र-सूर्य-सत्या भृशोऽन्तरिक्षश्च।**
**ऐशान्याद्याः क्रमशो दक्षिणपूर्वेऽनिलः कोणे।।२।।**

पूर्वोक्त एकाशीपद वास्तुमण्डल के पूर्वभाग (पूर्वदिशा) में अग्निकोण से क्रमशः शिखी-पर्जन्य-जयन्त-इन्द्र-सूर्य-सत्य-भृश-अन्तरिक्ष ये आठ देवता रहते हैं और अग्निकोण में अनिल का स्थान है ।।२।।

**पूषावितथ—गृहक्षत—यमगन्धर्वाख्य—भृङ्गराजमृगाः ।**
**पितृदौवारिक—सुग्रीव—कुसुमदन्ताम्बुपत्यसुराः ।।३।।**
**शेषोऽथ पापयक्ष्मा रोगः कोणे ततोऽहिमुख्यौ च।**
**भल्लाटसोमभुजगास्ततो दितिरदितिरिति क्रमशः।।४।।**
**मध्ये च ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमा स्थितः प्राच्याम्।**
**एकोत्तरात् प्रदक्षिणमस्मात्सविता विवस्वांश्च।।५।।**
**विबुधाधिपतिस्तस्मान्मित्रोऽन्ये राजयक्ष्माश्च।**
**पृथिवीधरापवत्सावित्येते ब्रह्मणः परिधौ।।६।।**
**आपोनामैशाने कोणे हौताशने च सावित्रः।**
**जय इति च नैर्ऋत्ये रुद्रानिलेऽभ्यन्तरपदेषु।।७।।**
**आपस्तथापवत्सः पर्जन्योऽग्निर्दितिश्च वर्गोऽयम्।**
**एवं कोणे कोणे पदिकाः स्युः पञ्च पञ्च सुराः।।८।।**
**बाह्या द्विपदाः शेषास्ते विबुधा विंशतिः समाख्याताः।**
**शेषाश्चत्वारोऽन्ये त्रिपदा दिक्ष्वर्यमाद्यास्ते।।९।।**

क्रम से दक्षिण में पूषा-वितथ-बृहक्षत-यम-गन्धर्व-भृंगराज व मृग, नैर्ऋत्यकोण में पितृदेवता, पश्चिम में दौवारिक-सुग्रीव-कुसुमदन्त-वरुण-असुर- शेष-

पापयक्ष्मा, वायव्य में रोग व उत्तर में नाग, मुख्य-भल्लाट-सोम-भुजंग- अदिति व दिति ये देवता निवास करते हैं। मध्य के नव कोष्ठों में ब्रह्मा जी का स्थान है। ब्रह्मा के पूर्व तीन स्थानों में अर्यमा दक्षिण के तीन स्थानों में विवस्वान्, पश्चिम के तीन स्थानों में मित्र, उत्तर के तीन में पृथ्वीधर निवास करते हैं। ये बारह देव त्रिपदिक व ब्रह्मा के परिधिस्थ कहे जाते हैं। ब्रह्मस्थान से अग्निकोण में सविता, नैऋत्य में भृंगराज व वायव्य में राजयक्ष्मा, ईशान में आपवत्स, शेष देवों के स्थान का ज्ञान चक्र से स्पष्ट हो जायेगा (चक्र पृ. १८३ पर देखें) ॥३-९॥

वास्तुपुरुषाङ्गविभागे देवाश्च तत्रैव–

**पूर्वोत्तर–दिङ्मूर्द्धा पुरुषोऽयमवाङ्मुखोऽस्य शिरसि।**
**शिखी आपो मुखे स्तने स्यादर्यमा ह्युरस्यापवत्सश्च ॥१०॥**
**पर्जन्याद्या बाह्या दृक्श्रवणोरःस्थलांसगा देवाः।**
**सत्याद्याः पञ्चभुजे हस्ते सविता च ससावित्रः ॥११॥**
**वितथो बृहत्क्षतयुतः पार्श्वे जठरे स्थितो विवस्वांश्च।**
**ऊरू जानू जङ्घे स्फिगिति यमाद्यैः परिगृहीताः ॥१२॥**
**एते दक्षिणपार्श्वे स्थानेष्वेवं च वामपार्श्वस्थाः।**
**मेढ्रे शक्रजयन्तौ हृदये ब्रह्मा पित्र्यङ्घ्रिगतः[1] ॥१३॥**

वास्तु पुरुष के अंगस्थ देवता और वास्तु पुरुष की आकृति- ईशानकोण में शिर, नैऋत्यकोण में पैर कर अधोमुख सोये वास्तु पुरुष के अंगों में रहने वाले देवता- शिर के स्थान में शिखी, मुख पर आप, स्तन पर अर्यमा, उरः वक्षस्थल पर आपवत्स, नेत्र-श्रवण-उरः- स्कन्ध पर पर्जन्यादि देव, भुज पर सत्यादि पाँच देव, हाथ पर सविता व सावित्र, पार्श्व में वितथ व बृहत्क्षत, जठर (उदर) पर विवस्वान्, ऊरु-जानु-जंघा-स्फिग् इन स्थानों पर यमादि देवता निवास करते हैं। इसी प्रकार वामभाग में शेष देवता निवास करते हैं, मेढ्र में शक्र- जयन्त, हृदय में ब्रह्मा, चरण में पितृदेवों का वास रहता है ॥१०-१३॥

प्रासादे च चतुःषष्टिपदवास्तुविवेचनम्–

**अष्टाष्टक–पदमथवा कृत्वा रेखा च कोणगास्तिर्यक्।**
**ब्रह्मा चतुष्पदोऽस्मिन्नर्द्धपदा बाह्यकोणस्थाः ॥१४॥**
**अष्टौ च बहिःकोणेष्वर्द्धपदास्तदुभयास्थिताः सार्द्धाः।**
**उक्तेभ्यो ये शेषास्ते द्विपदा विंशतिस्ते हि ॥१५॥**

१. पिताघ्रिगतः इति मूलपाठः।

प्रासादों में चौंसठ पदीय देवताओं का विवरण है, यथा– नव-नव ऊर्ध्वाधर व तिर्यक् रेखा करने से बीच में चौंसठ पद स्थानों का विभाग होता है । कोणों से तिर्यक् ब्रह्मस्थान तक चार कर्णाकार रेखा करनी चाहिए । इस चौंसठ पद वाले वास्तु के मध्य के चार स्थानों में ब्रह्मा व ब्रह्मा के बाह्य कोणों में आठ-आठ अर्धपदादिक देवता रहते हैं । शेष द्विपदिक इनकी संख्या बीस है (पृष्ठ- संख्या १८४ पर देखें) ॥१४-१५॥

वास्तुमर्मस्थानज्ञानफलयोर्विशेषो वराहः–

**सम्पाता वंशानां मध्यानि समानि यानि च पदानाम् ।**
**तानि मर्माणि विद्यान्न तानि परिपीडयेत्प्राज्ञः ॥१६॥**
**तान्यशुचिभाण्डकीलस्तम्भाद्यैः पीडितानि शल्यैश्च ।**
**गृहभर्तुस्तुल्ये पीडामङ्गे प्रयच्छन्ति ॥१७॥**
**कण्डूयते यदङ्गं गृहभर्तुर्यत्र वाऽमराऽहुत्याम् ।**
**अशुभं भवेन्निमित्तं विकृतेर्वाग्नेः सशल्यं तत्र ॥१८॥**

वास्तुपीठ में वंशसंज्ञक कर्णाकार रेखाओं से जिन पूर्वापर रेखाओं व कोष्ठकों का सम्पात होता है, वे सम्पात-स्थान व कोष्ठक वास्तुपुरुष के मर्मस्थान माने जाते हैं, बुद्धिमान् पुरुष को इन मर्म स्थानों में खूँटी-भित्ति या किसी भी वस्तु-शल्य से पीड़ित नहीं करना चाहिए; क्योंकि वास्तुपुरुष का जो अङ्ग पीड़ित होगा, वही अंग गृहस्वामी का भी पीड़ित होगा। ८१ वास्तुपद चक्र के अवलोकन से मर्मस्थान का ज्ञान हो जायेगा ॥१६-१८॥

वास्तुविद्यायां मर्मस्थानं तत्रैव–

**रोगाद्वायुं पितृतो हुताशं शोषसूत्रमपि वितथात् ।**
**मुख्याद्भृशं जयन्ताच्च मृगमदितेश्च सुग्रीवम् ॥१९॥**
**तत्सम्पाता नव ये तान्यतिमर्माणि सम्प्रदिष्टानि ।**

मर्मपरिमाणम्–

**यश्च पदस्याष्टमांशस्तत्प्रोक्तं मर्मपरिमाणम् ॥२०॥**

८१ पद वास्तुपीठ में रोगस्थान से अनिल (वायु) स्थान,पितृस्थान से शिखी (अग्नि), वितथस्थान से शोष, मुख्यस्थान से भृश,जयन्त से मृग स्थान, अदिति से सुग्रीवस्थान तक गई हुई कर्णाकार वंशसंख्यक रेखाओं से पूर्वापरा दक्षिणोत्तर शिरा नाम की रेखाओं का नव स्थानों में सम्पात होता है। इन नव सम्पात के स्थानों को अतिमर्म स्थान से जाना जाता है। इन मर्मस्थानों का परिमाण ८१ पद विभाग में एकपद का जो माप होगा, उसके आठवें भाग के बराबर मर्म परिमाण होता है ॥१९-२०॥

वंशशिरायाश्च प्रमाणं तत्रैव–

**पदहस्तसंख्यया परिमितानि वंशोऽगुलानि विस्तीर्णः।**
**वंशव्यासोऽध्यर्द्धः शिराप्रमाणं विनिर्दिष्टम्।।२१।।**

रोगाद्वायुरित्यादि से निर्मित छः सूत्रों को वंश तथा पूर्वापर व दक्षिणोत्तर सूत्रों को शिरा कहते हैं। इनका विस्तार पद की जो हाथ-संख्या होगी, उतना ही अंगुल वंशनामक सूत्र का विस्तार होगा । पूर्वापर व दक्षिणोत्तर रेखायें (१०-१०) शिरा कही जाती हैं। वंश के विस्तार का अध्यर्द्ध (सार्द्ध) मान शिरा का मान होता है ॥२१॥

शास्त्रान्तरे तासां शिराणां नामानि–

**शान्ता यशोवती कान्ता विशाला प्राणवाहिनी।**
**सती च सुमना नन्दा सुभद्रा सुरथा तथा।।**
**पूर्वापरा गता ह्येता उदग्याम्याश्रिता शृणु।**
**हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया।।**
**जया काष्ठा विशोका च तथेन्द्रा दशमी स्मृता।**
**धान्या धरा विशाला च स्थिरा रूपा गदा प्रिया।।**
**विभवा प्रभवा चान्याः सौम्ययाम्याश्रिताः शिराः।।**

केवल नव का ही विकल्प है, दशमी पूर्ववत् इन्द्रा है ।

मर्मविषये सूत्रधारस्तत्र पुरुषाकारवास्तुस्वरूपम् –

**कल्पयेदेवमेतेन स भवेत् पुरुषाकृतिः ।**
**सिरावंशानुवंशाश्च सन्धयः सानुसन्धयः ।।२२।।**
**मर्माण्यथ महावंशा लक्ष्म्या वास्तुशरीरगाः ।**
**सिराः कर्णगता याः स्युर्नाड्यस्ताः परिकीर्तिताः ।।२३।।**
**पदस्य षोडशो भागस्तत्प्रमाणं प्रकीर्तितम् ।**
**महावंशौ प्राक्प्रतीच्यौ याम्योदीच्यौ च मध्यगौ ।।२४।।**
**प्रमाणं पञ्चमो भागः पदस्योदाहृतं तयोः ।**
**वंशास्तेऽस्मिन् समुद्दिष्टा रेखा याः स्युर्मुखायताः ।।२५।।**
**या तिर्यगायता रेखास्तेऽनुवंशाः प्रकीर्तिताः ।**
**सम्पाता ये स्युरेतेषां मर्म तत्संप्रचक्षते ।।२६।।**
**उपमर्माणि तान्याहुः पदमध्यानि यानि हि ।**
**भागोऽष्टमोऽथ दशमो द्वादशः षोडशोऽपि च ।।२७।।**

वास्तु की आकृति पुरुषवत् यहाँ कल्पना की गई है, जिसका पूर्णाङ्ग मनुष्य-शिर-मुख-प्रभृति विभक्त है। शिरायें वंश-अनुवंश-सन्धि-अनुसन्धियाँ-मर्म-महावंश ये सभी वास्तुपुरुष के प्रत्येक अंग में विभक्त परिलक्षित किये गये हैं । कर्ण तक फैली शिरायें नाडी के नाम से जानी जाती हैं। जिनका माप पद के सोलहवें भाग के बराबर है। पूर्व पश्चिम व याम्योत्तर के दो-दो वंशों के बीच-बीच के पदों के पञ्चमांशतुल्य इन वंशों का माप होता है। इस वास्तुपुरुष के शरीर में फैली हुई रेखायें वंश हैं और तिर्यक् कर्णाकार रेखायें अनुवंश हैं, जिन्हें (आचार्यभेदेन) शिरा कहते हैं। इन कर्णाकार व वंशाकार रेखाओं का परस्पर सम्पात मर्मस्थान से प्रसिद्ध है। इनके वंशानुवंशों का जो भाग पद के मध्य में होगा,वह उपमर्म शब्द से प्रसिद्ध है । उपमर्म का मान पद के आठवें,दशवें,बारहवें,सोलहवें भाग के समान होता है ॥२२-२७॥

**पदतो मानमिष्टं स्याद् वंशादीनामनुक्रमात् ।**
**वंशाष्टकस्य यः सन्धिः स सन्धिरिति कथ्यते ।।२७।।**
**ये पुनः स्युस्तदङ्गानां प्रोक्तास्ते चानुसन्धयः ।**
**बालाग्रतुल्यं सन्धीनां प्रमाणं परिचक्षते ।।२८।।**

# वास्तुपूजनवेदी

पूर्व

ईशान आग्नेय

६१ ब्रह्मणे नमः ६२ इन्द्राय नमः ५४ ५५

४६ स्कन्दाय नमः ५० ४७

<table>
<tr><td>शिखिने नमः (र.१)</td><td>पर्जन्याय नमः (पी.२)</td><td rowspan="2">जयन्ताय नमः (पी.३)</td><td rowspan="2">कुलिशायुधाय नमः (पी.४)</td><td rowspan="2">सूर्याय नमः (र.५)</td><td rowspan="2">सत्याय नमः (श्वे.६)</td><td rowspan="2">भृशाय नमः (कृ.७)</td><td>आकाशाय नमः (कृ.८)</td><td>वायवे नमः (धू.९)</td></tr>
<tr><td>दित्यै नमः (पी.३२)</td><td>अद्भ्यो नमः (श्वे.३३)</td><td>सवित्राय नमः (श्वे.३४)</td><td>पूष्णे नमः (र.१०)</td></tr>
<tr><td colspan="2">अदित्यै नमः (पी. ३१)</td><td>आपवत्साय नमः (श्वे.४४)</td><td colspan="3">अर्यम्णे नमः (कृ. ३७)</td><td>सवित्रे नमः (र.३८)</td><td colspan="2">वितथाय नमः (श्वे. ११)</td></tr>
<tr><td colspan="2">सर्पेभ्यो नमः (कृ. ३०)</td><td rowspan="3">पृथ्वीधराय नमः (र.४३)</td><td colspan="3" rowspan="3">ब्रह्मणे नमः<br>ब्रह्मणे नमः<br>नवपद श्वेत (ब्रह्मा) ४५ तथा पीत वृष वास्तु<br>ब्रह्मणे नमः<br>ब्रह्मणे नमः</td><td rowspan="3">विवस्वते नमः (श्वे.३९)</td><td colspan="2">गृहक्षताय नमः (पी. १२)</td></tr>
<tr><td colspan="2">सोमाय नमः (श्वे. २९)</td><td colspan="2">यमाय नमः (कृ. १३)</td></tr>
<tr><td colspan="2">भल्लाटाय नमः (कृ. २८)</td><td colspan="2">गन्धर्वाय नमः (र. १४)</td></tr>
<tr><td colspan="2">मुख्याय नमः (र. २७)</td><td>राजयक्ष्मणे नमः (र.४२)</td><td colspan="3">मित्राय नमः (श्वे. ४१)</td><td>विबुधाधिपाय नमः (र.४०)</td><td colspan="2">भृङ्गराजाय नमः (कृ. १५)</td></tr>
<tr><td>अहये नमः (र.२६)</td><td>रुद्राय नमः (र.३६)</td><td rowspan="2">शोषाय नमः (कृ.२३)</td><td rowspan="2">असुराय नमः (पी.२२)</td><td rowspan="2">वरुणाय नमः (श्वे.२१)</td><td rowspan="2">पुष्पदन्ताय नमः (र.२०)</td><td rowspan="2">सुग्रीवाय नमः (श्वे.१९)</td><td>जयाय नमः (श्वे.३५)</td><td>मृगाय नमः (पी.१६)</td></tr>
<tr><td>रोगाय नमः (र.२५)</td><td>पापाय नमः (पी.२४)</td><td>दौवारिकाय नमः (र.१८)</td><td>पितृभ्यो नमः (र.१७)</td></tr>
</table>

उत्तर: सोमाय नमः ६० पिलिपिञ्छाय नमः ५३

दक्षिण: यमाय नमः ५६ अर्यम्णे नमः ५१

४९ कुम्भकाय नमः ५२ ४८

५९ वरुणाय नमः ५८ अनन्ताय नमः ६३ ५७

वायव्य पश्चिम नैर्ऋत्य

## एकाशीति-पद-वास्तु-चक्रम्

ईशान | पूर्व | अग्नि

उत्तर | दक्षिण

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शिखी | पर्जन्य: | जयन्त: | इन्द्र: | सूर्य: | सत्य: | भृश: | अन्तरिक्ष: | अनिल: |
| दिति: | आप: | जयन्त: | इन्द्र: | सूर्य: | सत्य: | भृश: | सावित्र: | पूषा |
| अदिति: | अदिति: | आपवत्स: | अर्यमा | अर्यमा | अर्यमा | सविता | वितथ: | वितथ: |
| भुजग: | भुजग: | पृथ्वीधर: | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्क्षत: | बृहत्क्षत: |
| सोम: | सोम: | पृथ्वीधर: | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | यम: | यम: |
| भल्लाट: | भल्लाट: | पृथ्वीधर: | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | गन्धर्व: | गन्धर्व: |
| मुख्य: | मुख्य: | राजयक्ष्मा | मित्र: | मित्र: | मित्र: | इन्द्र: | भृंगराज: | भृंगराज: |
| नाग: | रुद्र: | शेष: | असुर: | वरुण: | कुसुमदन्त: | सुग्रीव: | जय: | मृग: |
| रोग: | पापयक्ष्मा | शेष: | असुर: | वरुण: | कुसुमदन्त: | सुग्रीव: | दौवारिक: | पितर: |

वायव्य | पश्चिम | नैऋत्य

## चतुःषष्टिपद- वास्तुचक्रम्

ईशान | पूर्व | अग्नि

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शिखी / दिति: | पर्जन्य: | जयन्त: | इन्द्र: | सूर्य: | सत्य: | भृश: | अन्तरिक्ष: / अनिल: |
| अदिति: | पर्जन्य: / अदिति: | जयन्त: | इन्द्र: | सूर्य: | सत्य: | भृश: / पूषा | पूषा |
| भुजग: | भुजग: | आपवत्स: / आप: | अर्यमा | अर्यमा | सविता / सावित्र: | वितथ: | वितथ: |
| सोम: | सोम: | पृथ्वीधर: | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्क्षत: | बृहत्क्षत: |
| भल्लाट: | भल्लाट: | पृथ्वीधर: | ब्रह्मा | ब्रह्मा | विवस्वान् | यम: | यम: |
| मुख्य: | मुख्य: | रुद्र: / राजयक्ष्मा | मित्र: | मित्र: | इन्द्र: / जयन्त: | गन्धर्व: | गन्धर्व: |
| नाग: | नाग: / शेष: | असुर: | वरुण: | कुसुमदन्त: | सुग्रीव: | भृंगराज: / दौवारिक: | भृंगराज: |
| रोग: / पापयक्ष्मा | शेष: | असुर: | वरुण: | कुसुमदन्त: | सुग्रीव | दौवारिक: | मृग: / पितर: |

उत्तर (बाईं ओर) | दक्षिण (दाईं ओर)

वायव्य | पश्चिम | नैऋत्य

वंशों का मान पदमाप के अनुसार उक्तवत् होता है। आठों वंशों की सन्धियाँ ही उन वंशों की सन्धियाँ होती हैं और जो वंशों के आगे की सन्धियाँ हैं, वे अनुसन्धि के नाम से प्रसिद्ध हैं। इन सन्धियों का प्रमाण बालाग्र केश के अग्रभाग के समान होता है ॥२७-२८॥

**तदर्धमनुसन्धीनां प्रमाणं समुदीरितम्।**
**यत्नेनैतानि सन्त्यज्य वास्तुविद्याविशारदः ॥२९॥**

बालाग्र के आधे के बराबर अनुसन्धियों का मान होता है। वास्तु-विद्या-विशारदों को चाहिए कि उपर्युक्त मर्मस्थान व सन्धिस्थान को त्याग देवें ॥२९॥

**द्रव्याणि प्रयतो नित्यं स्थपतिर्विनिवेशयेत्।**
**महावंशस्य नाक्रान्तिं कुर्याद्द्रव्येण केनचित् ॥३०॥**
**इतरेषु पुनर्द्रव्यं मध्यवंशेषु सन्त्यजेत्।**
**महावंशसमाक्रान्तौ भवेत् स्वामिवधो ध्रुवम् ॥३१॥**
**वर्षेण तपनाद्भीतिं वंशानां पीडनाद्विदुः।**
**उपमर्माणि रोगाय मर्माणि कुलहानये ॥३२॥**
**उद्वेगायार्थनाशाय शिराश्च स्युः प्रपीडिताः।**
**कलिः स्यात्सन्धिविद्धेषु पीडितेष्वनुसन्धिषु ॥**
**तस्मादेतानि सर्वाणि पीडितान्युपलक्षयेत् ॥३३॥**
**ज्ञात्वा शिराः सानुशिराश्च नाडी वंशानुवंशानपि वास्तुदेहे।**
**यत्नेन मर्माणि फलानि चैषां वेधं त्यजेद् वास्तुमुपैति नापत् ॥३४॥**

किसी भी द्रव्य से महावंशों का अतिक्रमण नहीं करना चाहिए, अन्य मध्य के वंशों को द्रव्य से बाहर रखा जाय। महावंशों के अतिक्रमण से स्वामी का वध होता है। वंशो के पीड़न से वर्षा व ताप का भय है। उपमर्मों के पीडन से रोग, मर्मों के पीड़न से आकस्मिक कुल की हानि होती है। शिरा के उत्पीडन से उद्वेग व अनर्थ समुपस्थित होता है। सन्धि व अनुसन्धियों के पीडन से कलि होती है, अतः वास्तुशरीर के शिराओं-अनुशिराओं-नाड़ियों वशों-अनुवंशों एवं मर्मों को समझकर उन्हें पीडित न कर वास्तु का प्रारम्भ किया जाय; क्योंकि वेधरहित निर्माण शान्तिकारक होता है ॥३०-३४॥

अत्रैव प्रसङ्गे मर्मवेधः–

**वर्णिनां भवनादीनि निवेशा राजवेश्मनाम्।**
**एकाशीतिपदेनेन्द्रस्थानं च विभजेत्सुधीः ।।३५।।**
**प्रासादा विविधास्तद्वद् विचित्राश्चात्र मण्डपाः।**
**तान् मापयेच्छतपदप्रविभागेन बुद्धिमान्।।३६।।**

चारों वर्णों, राजाओं तथा इन्द्र के निवासगृह में एकाशीपद वास्तु का विभाग होता है और प्रासाद व मण्डपों की संख्याएँ अनेक हैं। उन प्रासादों व मण्डपों में शतपद वास्तु का विभाग होता है ॥३५-३६॥

**यः पुनः स्याच्चतुष्षष्टिपदस्तेन विभाजयेत्।**
**नरेन्द्रशिविरग्राम–खेटादि–नगरादि च।।३७।।**

राज-शिविर-ग्राम-खेट प्रभृति नगरों में चौंस द वास्तु के विभाग की क्रिया करनी चाहिए ॥३७॥

तत्र देवता–

**अन्तस्त्रयोदशसुरा द्वात्रिंशद् बाह्यतश्च ते।**
**तेषां स्थानानि मर्माणि शिरा वंशाश्च तेषु ते।।३८।।**
**मुखे हृदि च नाभौ च मूर्ध्नि च स्तनयोस्तथा।**
**मर्माणि वास्तुपुंसेऽस्य षण्महान्ति प्रचक्षते।।३९।।**

वास्तु पद के भीतर (अन्तस्थ) तेरह व बाहर के बत्तीस देवताओं के मर्म-शिरा व वंश हैं। उनके मुख-हृदय-नाभि-शिर-दोनों स्तनों में वास्तुपुरुष के मर्म को षड्महान्ति कहते हैं ॥३८-३९॥

मर्मस्थानम्–

**चतुर्ष्वपि विभागेषु शिरा याः स्युश्चतुर्दिशम्।**
**तानि मर्माणि चोक्तानि द्वारमध्यानि यानि च।।४०।।**

सोलह प्रभृति जो वास्तु पद के १६। ६४। ८१। १०० ये विभाग हैं, इनमें सर्वत्र पूर्वोक्त वंशशिरा के सम्पात स्थान व द्वार का मध्यभाग मर्मस्थान कहे जाते हैं ॥४०॥

**भित्तिविस्तृतमध्येन यद्वा मध्येन दारुणः।**
**मर्म यत् पीड्यते येन गृहे तत्रोच्यते फलम्।।४१।।**

भित्ति के विस्तार के मध्य तथा लकड़ी के मध्यभाग से जो मर्मस्थान विद्ध होते हैं, उनका फल अग्रिम पद्यों से कहूँगा ॥४१॥

**द्वारैर्वा भित्तिभिर्वापि मर्मणां परिपीडनात्।**
**दौर्गत्यं गृहिणः प्राहुः कुलहानिस्तथापि वा।।४२।।**
**भवेत् स्वामि-वधस्तम्भैस्तुलाभिः स्त्रीपरिक्षयः।**
**स्नुषावधो जयन्तीभिर्बन्धुनाशश्च सङ्ग्रहैः।।४३।।**

यदि मर्मस्थान द्वार व भित्ति से विद्ध होता है, तो गृहस्वामी की दुर्गति व कुल की हानि होती है, स्तम्भों से विद्ध होने पर स्वामिवध, द्वार के ऊपर के काष्ठ को तुलाद्वार कहते हैं, इससे विद्ध होने पर स्त्रीनाश, जयन्ती (खूँटी) से बहू की हानि व संग्रह (एकत्रीकृत वस्तु) से भ्रातृ-बन्धुवर्ग का नाश होता है॥४२-४३॥

**मर्मस्थानगतैः कायैः भर्तुः कायो निपीड्यते।**
**सुहृद्विश्लेषमिच्छन्ति सन्धिपालैश्च तद्विदः।।४४।।**
**नागपाशैर्धनच्छेदो नागदन्तैः सुहृत्क्षयः।**
**कपिच्छकैश्च मर्मस्थैः प्रेष्याणां क्षयमादिशेत्।।४५।।**

मर्मस्थान में वास्तुपुरुष का जो अङ्ग है और वह विद्ध है, तो स्वामी का वही अंग पीडित होता है। वास्तुविशेषज्ञ सन्धिपालों से विद्ध होने पर मित्रों से वैमनस्य, नागपाश से धनच्छेद, नागदन्त से मित्रनाश, कपिच्छक कंगूरों से भृत्य (सेवक) पीडित होता है ॥४४-४५॥

**षड्दारुकाण्यनुशिरा गवाक्षालोकनानि च।**
**मर्ममध्योपगान्येतान्यावहन्ति धनक्षयम्।।४६।।**
**द्वारद्रव्यतुलास्तम्भ—नागदन्त—गवाक्षकैः।**
**द्वारमध्यार्दितं रोगकुलपीडाधनक्षयः।।४७।।**

पूर्व के ३७ पद्य में उक्त षड्दारु-अनुशिरायें-गवाक्ष-अवलोकन मार्ग-ये यदि मर्म के मध्य में हैं, अर्थात् इनसे मर्मविद्ध होने पर रोगभय व धन की हानि होती है। अर्थात् स्थितद्वार-द्रव्य-तुला-गवाक्ष-स्तम्भ-नागदन्तों से द्वार का मध्यभाग पीड़ित अर्थात् द्वार का बीच इनसे विद्ध हो, तो रोग धनक्षय व कुल की पीड़ा होती है ॥४६-४७॥

**नृपदण्डभयं पत्युः पीडनं च प्रचक्षते।**
**द्वारमध्येषु षड्दारु मध्येष्वपि च सूरयः।।४८।।**
**कर्णद्रव्यादिभिर्विद्धेष्वेतदेव फलं विदुः।**
**शय्यानुवंशविहिता गृहिणां कुलनाशिनी।।४९।।**

**क्षयावहा नागदन्ता भर्तुः शय्या–वितानुगाः ।**
**वाताऽयनै रथस्तम्भैर्ये विद्धा नागदन्तकाः ।।५०।।**
**ते शस्त्रभीतिदा भर्तुर्यद्वा चौरभयप्रदाः ।**
**द्रव्यधान्य–विनाशाय शोकाय कलहाय च ।।५१।।**

द्वारमध्य व षड्दारुओं के मध्य के पीडन से नृपदण्ड का भय व स्वामी का उत्पीडन होता है। कर्णद्रव्य (कोनों में लगे वस्तु) से विद्ध होने पर उपर्युक्त नृपदण्ड भय व स्वामी का उत्पीड़न होता है। शय्या (चारपाई) यदि अनुवंशों के अनुकूल रखी जाय (अर्थात् सोने वाली शय्या तिरछे अनुवंशों की भाँति हो) तो कुल का नाश होता है । शय्या का वितान (चाँदनी) नागदन्त से विद्ध हो, तो स्वामिनाश, नागदन्त गवाक्ष व स्तम्भें विद्ध हो तो शस्त्र व चौरभय,द्रव्य,धान्य विनाश,शोक व कलहभय उत्पन्न होता है ।।४८-५१।।

**गृहमध्यगतं द्वारं भवेत् स्त्रीदूषणाय च ।**
**द्रव्येणान्यतरेणापि महामर्मनिपीडितम् ।।५२।।**
**भवेत् सर्वस्वनाशाय गृहिणो मरणाय च ।**
**अंशुकाश्चोर्ध्ववंशाश्च तुम्बिकाः सेन्द्रकीलकाः ।।५३।।**
**पुर–प्रासाद–गेहानां वेधेऽप्येते न दोषदाः ।।५४।।**

गृह के मध्य में स्थित द्वार से स्त्रियाँ दूषित होती हैं। यह पूर्वोक्त द्वार दोष प्रकरण में भी उक्त है। अन्य द्रव्यों से (उपर्युक्त द्रव्यभिन्न) महामर्म विद्ध हो तो गृही के मरण व सर्वनाश की सूचना है ।

**विशेष–** पुर-प्रासाद व घरों में अंकुश, ऊर्ध्ववंश तुम्बिका व इन्द्रकीलों से विद्ध होने पर भी विपरीत फल नहीं होता है। अर्थात् पुर-प्रासाद-नगर के गृहों में वेध का विचार नहीं करना चाहिए ।।५२-५४।।

**।। इति वास्तुपददेवतानिरूपणं नाम विंशतितमं सोपानम् ।।**

○

## अथ हस्तमाननिरूपणं नामैकविंशतितमं सोपानम्

तत्र तावत्पूर्वं हस्तप्रयोजने सूत्रधारः–

**हेतुः समस्तवास्तूनामाधारः सर्वकर्मणाम्।**
**मानोन्मान–विभागादि–निर्णयैक–निबन्धनम् ।।१।।**
**अत इदानीं हस्तस्य सम्यग् निश्चय–संयुतम्।**
**कथ्यते त्रिविधस्यापि लक्षणं शास्त्रदर्शितम्।।२।।**

वास्तु के समस्त कर्मों का एकमात्र आधार हाथ है; क्योंकि मान-उन्मान विभाग-प्रतिभागों का निर्णय व सीमा निर्धारण का एकमात्र हाथ ही निबन्धन (निर्णायक) है। अतः शास्त्रानुमोदित हाथ के लक्षणों का प्रतिपादन प्रस्तुत है ॥१-२॥
( पूर्व प्रतिज्ञा के अनुसार अब मैं शास्त्र के (यथाशास्त्र) अनुसार हाथ के तीन भेदों के लक्षणों को बता रहा हूँ ) ॥

लक्षणम्–

**रेण्वष्टकेन बालाग्रं लिक्षा स्यादष्टभिश्च तैः।**
**भवेद् यूकाष्टभिस्ताभिर्यवमध्यं तदष्टकम्।।३।।**
**अष्टभिः सप्तभिः षड्भिरङ्गुलानि यवोदरैः।**
**ज्येष्ठ–मध्य–कनिष्ठानि तच्चतुर्विंशतिः करः।।४।।**

आठ रेणु का एक बालाग्र,आठ बालाग्र का एक लिक्षा,आठ लिक्षा का एक यूका,आठ यूका का एक यवोदर (यव का फटा भाग) होता है। आठ-सात-छः यवोदरों का क्रमशः उत्तम-मध्यम व कनिष्ठ अंगुल होता है। इससे चौबीस अंगुल का उत्तम-मध्यम-कनिष्ठ तीन प्रकार का हाथ होता है॥३-४॥

**हस्तः स्वाङ्गुलमानेन विधेयाङ्गुलमिष्यते।**
**तत्सार्धं द्विगुणं वापि बाहुल्यन्तु तदर्धतः।।५।।**
**सोऽष्टभिः पर्वभिर्युक्तः करः कार्यो विजानता।**
**करस्यार्धं चतुःपर्व शेषं स्याद्व्यक्तमङ्गुलैः।।६।।**
**तत्राग्रे पर्वरेखाः स्युस्तिस्रः पुष्पकभूषिताः।**
**शेषास्वङ्गुलरेखासु पुष्पाणि विदधाति च।।७।।**
**अत्रार्धे मध्यतः कार्यं द्वेधा पञ्चममङ्गुलम्।**
**मध्यं त्रिधाष्टमं कार्यं चतुर्धा द्वादशं तथा।।८।।**

बुद्धिमान् स्थपति उपर्युक्त दो हाथों (एक गज) का निर्माण कर उसमें आठ विभाग करे और उसके आधे में चार भाग करे, जिसे पर्वसंज्ञा से अवगत किया जायेगा। प्रत्येक पर्वों में तीन-तीन अंगुलों का विभाग कर देना चाहिए। गज के आगे तीन रेखाओं को पुष्पादि से परिचयार्थ भूषित किया जाय, शेष पाँच निर्विकार चिह्नरहित हों, हाथ या गज के मध्य से आगे पाँचवें भाग को दो भाग में विभक्त किया जाय और आठवें (भाग) पर्व को तीन भागों में विभक्त किया जाय और बारहवें को चार भागों में, समस्त प्रमाण अपने हाथ के बराबर निर्मित काष्ठ में होना चाहिए, जिसका वास्तु के निर्माण में उपयोग होता है ॥५-८॥

**कथितः करभेदोऽयमङ्गुलानां विभेदतः।**
**तस्य निर्माणदारूणि देवताश्च प्रचक्षते॥९॥**

अङ्गुलियों के भेद से त्रिविध हाथों का भेद कहा गया है। उन हाथों व गजों के निर्माण के लिए काष्ठ व उनके देवता का वर्णन करता हूँ ॥९॥

गजस्य वा हस्तस्य निर्माणाय ग्राह्यकाष्ठम्—

**खदिराञ्जनवंशानि श्लक्ष्णं हीरं मनोरमम्।**
**सारवच्च भवेदिष्टं दारुहस्तप्रकल्पने॥१०॥**
**ग्रन्थिलं लघु निर्दग्धं जीर्णं विस्फुटितं तथा।**
**अदृढं कोटराक्रान्तं दारुहस्ताय नेष्यते॥११॥**

गज व हाथ के निर्माण के लिए खैरा-अञ्जन-बाँस और सारवान् (बलिष्ठ) काष्ठ का सुन्दर स्वरूप शुभग हाथ व गज करना चाहिए। किन्तु ग्रन्थि-कोटर-दग्ध-जीर्णशीर्ण-फटा-हल्का (लघु) बलहीन काष्ठ हाथ के लिए उपयुक्त नहीं है ॥१०-११॥

तत्र देवतानिरूपणम्—

**त्रिविधस्याप्यथैतस्य पर्वरेखासु देवताः।**
**मध्यादारभ्य विज्ञेयाः क्रमेण नव वच्मि ताः॥१२॥**

उपर्युक्त त्रिविध हाथों व गजों में निर्मित पर्व रेखाओं के मध्य से नव देवता होते हैं ॥१२॥

पर्वसु देवतानिरूपणम्—

**ब्रह्मा वह्निर्यमो विश्वकर्मा नाथश्च पायसाम्।**
**वायुर्धनाधिपो रुद्रो विष्णुश्चाग्रे जगत्पतिः॥१३॥**

मध्यभाग से क्रमशः पूर्व व पर क्रम से ब्रह्मादि देवताओं का अंश रहता है, इन देवताओं की कल्पना की जाय, देवस्थापनक्रम हाथ के बीच में ब्रह्मा व ब्रह्मा को आदि से लेकर दायाँ व बायाँ उत्तरोत्तर भाग की कल्पना की जाय। जैसे ब्रह्मा से दायें यम व बायें अग्नि, अग्नि के वाम विश्वकर्मा व यम के दायें वरुण, वरुण के दायें कुबेर, विश्वकर्मा के वाम वायु व वायु के वाम में रुद्र तथा कुबेर के दायें विष्णु, इनमें प्रथमादि क्रम से रुद्र-वायु-विश्वकर्मा-अग्नि-ब्रह्मा-यम-वरुण-कुबेर व विष्णु के स्थान होंगे ॥१३॥

**वास्तु–द्रव्य–विभागेषु यानेषु च विशेषतः।**
**प्रारभेत यतो मानं कल्पयेद्देवता ततः ।।१४।।**

वास्तु या यान वाहनों के विभाग प्रमाण में भी उपर्युक्त त्रिविध हाथों में जिसका प्रयोग किया जाय, उन्हीं विभागों के अनुसार देवताओं की कल्पना करनी चाहिए ॥१४॥

**विशेष–** वास्तु व यान की समाप्ति या प्रारम्भ व फल का विचार हाथ के स्थान विभक्त देवस्थानों में नहीं होना चाहिए, अन्यथा वेध हो जायेगा और उसका फल अनिष्ट होता है।

आरम्भसमाप्तिविषये स्थानं यथा तत्रैव–

**ब्रह्माऽनलकयोर्मध्ये यदा हस्तं तु धारयेत्।**
**कर्मस्वधिगतस्तेषां पुत्रलाभो भविष्यति ।।१५।।**
**कर्मणः सुष्ठु निष्पत्तिः स्थपतेर्योग्यमक्षयम्।**
**ब्रह्मा यमस्तयोर्मध्ये यदा हस्तं तु धारयेत्।।१६।।**
**कर्ता सशिल्पिकश्चैव नचिरेण विनश्यति।**
**विश्वानलकयोर्मध्ये हस्तसूत्रं यदा धृतम्।।१७।।**
**सुष्ठु कर्मणि मध्यान्तं निष्पन्ने पुरवृद्धिता।**
**यमजलजयोर्मध्ये मध्यमं च विनिर्दिशेत्।।१८।।**
**पवनो विश्वकर्मा चोभयोर्मध्ये च धारणम्।**
**यदा तु तत्र कर्मान्तं शुभं तत्सर्वकामदम्।।१९।।**
**नीर–धनदयोर्मध्ये मध्यमं च विनिर्दिशेत्।**
**एषां मध्ये यदा वत्स! हस्तं तत्र यदा धृतम्।।२०।।**
**अनावृष्टिभयं लोके देशभङ्गो न संशयः।**
**रुद्र–पवनयोर्मध्ये रुचिहस्तन्तु धारयेत्।।२१।।**

## सूत्राष्टकम्



सूत्राष्टकं दृष्टि-नृहस्त-मौञ्ज-कार्पासकं स्यादवलम्बसाधनम् ।
काष्ठं न सृष्ट्याख्यमतो विलेख्यमित्यत्र सूत्राणि वदन्ति तज्ज्ञाः ॥

**तत्र लक्ष्मीवतस्तस्य कार्यसिद्धिर्न संशयः।**
**विष्णु–धनदयोर्मध्ये या पाणिकराग्रतः।।२२।।**
**विविधास्तत्र भोगाश्च प्रजायन्ते नरस्य हि।**
**ज्येष्ठादीनामथैतेषां संज्ञाभेदो विधीयते।।२३।।**

**अब हस्तधारण की विधि प्रस्तुत है–**

ब्रह्मा व अग्नि के मध्य में हस्तधारण करते हैं, तो कार्य की सिद्धि व पुत्रलाभ होता है। ब्रह्मा व यम के मध्य से कर्ता व शिल्पी शीघ्र नष्ट हो जायेंगे। विश्वकर्मा व अग्नि के मध्य से पूर्ण कार्य की सिद्धि व नगर तथा गृह की वृद्धि होती है। गृहस्वामी स्थपति दीर्घायुष्य वाले होते हैं, यम-वरुण के मध्य से सामान्य फल की प्राप्ति है। वायु व विश्वकर्मा के मध्य से प्रारम्भ कर्मों का शुभान्त होता है, कुबेर-वरुण के बीच से अनावृष्टि, गृह अथवा देशभंग होता है, रुद्र-वायु के बीच से लक्ष्मी-वृद्धि के साथ कार्य सम्पन्न होता है, कुबेर व विष्णु के मध्य से अनेकों भोगों को भोगने का अवसर मिलता है॥१५-२३॥

**गज या हाथ के निर्माण में बोधक चक्र–**

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रुद्र | वायु | विश्वकर्मा | अग्नि | ब्रह्मा | यम | वरुण | कुबेर | विष्णु |

ज्येष्ठादिहस्तसंज्ञाविशेषस्तत्रैव–

**यवाष्टाङ्गुलैः क्लृप्तः प्रकर्षेणायतः किल।**
**ज्येष्ठो हस्तः स विद्वद्भिः प्रोक्तः प्राशयसंज्ञितः।।२४।।**
**यः पुनः कल्पितः सप्तयवक्लृप्तैरिहाङ्गुलैः।**
**तज्ज्ञैः स मध्यमो हस्तः साधारण इति स्मृतः।।२५।।**
**मात्रेत्यल्पं यतः प्रोक्तं हस्तश्च शय उच्यते।**
**तेन मात्राशयः स स्याद्धस्तो यः षड्यवाङ्गुलैः।।२६।।**

आठ यवांगुल से २४ अंगुल के हाथ की संज्ञा ज्येष्ठ या प्राशय, ७ यवांगुल मान के हाथ को मध्यम व साधारण तथा छः यवांगुल प्रमाण हाथ को लघु व मात्राशय नाम से जानना चाहिए ॥२४-२६॥

अथ चैतेषां हस्तानां प्रयोजनम्–

**[१]प्रासादवेश्म–परिखा–खेट-ग्राम-पुरादिषु ।**
**मार्गाश्च निर्गमाश्चैषां सीमाक्षेत्रान्तराणि च ।।२७।।**
**वनोपवन–भागश्च देशान्तरविभक्तयः ।**
**योजनक्रोशगव्यूति–प्रमाणमपि चाध्वनः ।।**
**प्राशयेन प्रमातव्याः खातक्रकचराशयः ।।२८।।**

उपर्युक्त संज्ञाविशेष में हाथों का प्रयोजन–

खेट-ग्राम-पुर-प्रासाद-घर-परिखा-द्वार-गली-सभामण्डप-निर्गममार्ग-वन-उपवन-देशान्तरविभाग-मार्ग के योजन-कोश-गव्यूति-खात-क्रकच (आरा)-जल-यन्त्र–धान्यराशि प्रभृति के विस्तार व दीर्घ माप के लिए प्राशयहस्त (८ अङ्गुल) ही प्रयुक्त है ॥२७-२८॥

**तलोच्छ्रायान् मूलपादान् जलोद्देशानधःक्षितेः ।**
**तथा दोलाम्बुशस्त्रादि–पातमानविनिर्णयः ।।२९।।**
**शैलखात–निकेतानि सुरङ्गा मानमान्तरम् ।**
**साधारणेन वाट्यध्वमानं च परिकल्पयेत् ।।३०।।**
**आयुधानि धनुर्दण्डान् यानं शयनमासनम् ।**
**प्रमाणं कूपवापीनां गजानां वाजिनां नृणाम् ।।३१।।**
**अरघहेक्षु–यन्त्राणि युगयूपहलानि च ।**
**शिल्प्युपस्कर–नौ–छत्र–ध्वजातोद्यानि यानि च ।।३२।।**
**वृसीधर्मोपकरणपटवानादिकं च यत् ।**
**नलदण्डांस्तथा मात्राशयहस्तेन मापयेत् ।।३३।।**

तलों (स्तरों) की ऊँचाई (उन्नति) मूलस्तम्भ, भूमि के नीचे जलस्तर (जल के स्तर के बोधार्थ) दोला-जलाधार-शस्त्र-पातमान-निर्णय, पर्वतों को काटकर घर सुरङ्ग,वाटी-मार्ग (वाटिकामार्ग) के निर्माण में साधारण (सप्तयवांगुल) हाथ का प्रयोग करना चाहिए। कूप-वापी-हाथी-घोड़ा-मनुष्यों के निवास व जुवाठ-हल (जिससे जोताई की जाती है) प्राशय लघु हाथ, कुर्सी-मेज-धार्मिक उपकरण (यज्ञादि के उपयोगी पात्र) छत्र-ध्वज-वाद्य-नल-दण्ड प्रभृति में मात्राशय (लघु षडंगुल) का प्रयोग करना चाहिए ॥२९-३३॥

---

१. विभागायामविस्ताराः खेटग्रामपुरादिषु ।
प्रासादवेश्मपरिखाद्वाररथ्यासमादिषु ॥ वाऽपि योज्यम् ॥

अथ सामान्यमानसंज्ञाभेदस्तत्रैव–

**स्यादेकमङ्गुलं मात्रा कला प्रोक्ताऽङ्गुलद्वयम्।**
**पर्वत्रीण्यङ्गुलान्याहुर्मुष्टिः स्याच्चतुरङ्गुला।।३४।।**
**तलं स्यात्पञ्चभिः षड्भिः करपादाङ्गुलैर्भवेत्।**
**सप्तभिर्दृष्टिरष्टाभिरङ्गुलैस्तूणिरिष्यते ।।३५।।**
**प्रादेशो नवभिरुक्तैः स्याच्छयतालो दशाङ्गुलः।**
**गोकर्ण एकादशभिर्वितस्तिर्द्वादशाङ्गुला।।३६।।**

**सामान्य हस्त लक्षण–** एक अंगुल = मात्रा। द्व्यंगुल = कला। तीन = पर्व। चार = मुष्टि। पाँच = तल (कर-पद) हाथ-पैर = षडङ्गुल। सात= दिष्टि। आठ = तूणीर। नव = प्रादेश। दश = शयताल। एकादश = गोकर्ण। द्वादश = वितस्ति। अंगुल से उपर्युक्त प्रमाण है ॥३४-३६॥

**रत्निः स्यादेकविंशत्या स्यादरत्निः करोन्मितः।।**

२१ अंगुल की रत्नि व २४ अंगुल की अरत्नि होती है।

ग्राह्यहस्तो वास्तुशास्त्रे–

**यत्र दण्डैर्मितं क्षेत्रं तत्रायो हस्तसम्मितः।**
**क्षेत्रालये तु तत्रैव ग्राह्यस्तत्स्यादिहाङ्गुलैः।।३७।।**

प्रमाणित दण्ड से यदि क्षेत्र का मान अधिक है, तो वहाँ हाथों से अन्यथा क्षेत्र की न्यूनता में अंगुलों से आयादि का साधन किया जाय ॥३७॥

**विशेष–** हाथों से यदि आयव्ययादि शुद्धि न प्राप्त हो, तो अंगुल[1] जोड़ या घटाकर यथासम्भव शुद्ध पिण्ड से आयादि का साधन करना चाहिए।

अत्र नारायणोऽपि यथा–

**यावद्भूरिगुणं हृदि स्फुरति यत्तावद्विचार्यं करैः।**
**नो चेत्तनुयादिहाङ्गुलमुखं छित्वा विहायाथवा।।३८।।**

भट्टनारायण भी उपर्युक्त बात की पुष्टि करते हैं कि हाथ से अभीष्ट गणना की सिद्धि न हो सके, तो अंगुल जोड़ या घटाकर अभीष्ट पिण्डादि की सिद्धि करनी चाहिए ॥३८॥

**गृहेषु कर्महस्तेन मानं स्वामिकरेण वा।**
**देवतानान्तु हर्म्येषु कर्महस्ते न केवलम्।।३९।।**

घर बनाने में प्रसिद्ध राजहस्त या स्वामी के हाथ का प्रयोग, देव-हर्म्यादि निर्माण में मात्र व्यवहार हस्त (अर्थात् राजहस्त-फीट आदि प्रचलित विधि) का प्रयोग होना चाहिए ॥३९॥

१. स्वतन्त्र अङ्गुल से पिण्डसाधन किया जा सकता है, स्थान की न्यूनता से।

अत्रैव भीमपराक्रमः–

**ईप्सितं परमानन्दं गुणं चेदङ्गुलादिकम्।**
**निक्षिप्य शोधयेद्वापि साध्यं साधुफलं नृणाम्।।४०।।**

स्पष्टम् ।।४०।।

अत्रैव विश्वकर्मणोक्तिर्यथा–

**स्वामिहस्तप्रमाणेन ज्येष्ठपत्नीकरेण च।**
**गर्भमानं भवेद्गेहं नृणां प्रोक्तं पुरातनैः ।।४१।।**

घर के निर्माण में गृहस्वामी अपने हाथ या पत्नी के हाथ का प्रयोग करे, जिसके अनुसार भूरिगुण की उपलब्धि हो और यह हाथ का मान गृह के गर्भमात्र में प्रयुक्त होना चाहिए तथा भित्ति का मान पृथक् होना चाहिए ।।४१।।

अत्रैव हस्तप्रमाणम्–

**षडक्षतै राज्यमिहाङ्गुलं भवेत्सप्ताक्षतैर्वैष्णवमैशमङ्गुलम्।**
**यवोदरैरष्टभिरत्र तत्करो जिनाङ्गुलैस्तैश्च धनुश्चतुष्करम्।।४२।।**

छः अक्षत या चावल के बराबर एक राज्याङ्गुल,सात अक्षत विस्तार वैष्णव-शैव, आठ यवोदर विस्तार तुल्य सामान्य अंगुल होता है, अपने-अपने प्रमाण से २४ अंगुल का १ हाथ व ४ हाथ का एक धनुष का विस्तार होता है ।।४२।।

उपर्युक्ताङ्गुलहस्तप्रमाणप्रयोजनम्–

**प्रासादकुड्यादिषु पीठवेदिकाद्विजालयेषु स्मृतराज्यमङ्गुलम्।**
**जलाशयारामविधौ नृपालये विधौ हितं वैष्णवमन्यमन्यत्।।४३।।**

प्रासाद-भित्ति प्रभृति चौतरा वेदी व ब्राह्मण के गृहों में राज्यांगुल निर्मित हाथ (षडक्षत व षड्यवोदर प्रमाण से) का प्रयोग व जलाशय-बगीचा-राजगृह-देवगृह में वैष्णव, अन्यत्र (अष्टयवोदर) प्रमाण के हाथ का प्रयोग करना चाहिए ।।४३।।

हस्तसीमायां विश्वकर्मा–

**अनामिकान्तं हस्तः स्यादूर्ध्वबाहोः शरांशकः।**
**कनिष्ठिकामध्यमाभ्यां वा प्रमाणं नैव कारयेत्।।४४।।**

हाथ का माप अनामिकान्त (अरत्नि से) केहुनी के दोनों भागों में निकले हुए अंश से अनामिकान्त हाथ होता है। यहाँ ऊर्ध्वबाहु पुरुष के मान का पाँचवाँ भाग होता है। हाथ के प्रमाण में कनिष्ठा व मध्यमा अंगुलियों का प्रयोग नहीं करना चाहिए ।।४४।।

अत्रैव गृहचिन्तामणौ च–

**गृहे मृण्मये मानमन्तःप्रमाणं तथा चेष्टिकाभित्तिभागं तदर्धम् ।**
**तथा चोत्पलानां सभित्या सदैव कुर्याद् बुधश्चान्यथा वित्तनाशनम् ।।४५।।**

मृण्मय दीवार भीतर, इष्टिका दीवार आधी और पाषाण दीवार समस्त पिण्ड के अन्दर आनी चाहिए। मिट्टी की दीवार के पूर्ण क्षीण व ईंट के आधे क्षीण होने की सम्भावना व पाषाण के अक्षुण्ण होने से उपर्युक्त प्रमाण ग्राह्य व मान्य है । अन्यथा पिण्ड आपत्तिजनक हो सकता है ॥४५॥

अत्रैव विशेषो यथा–

**अङ्गेषु वङ्गेषु कलिङ्गदेशे सौराष्ट्रदेशे मगधे च देशे।**
**मरुज्जले सिन्धु-गिरिप्रदेशे सभित्तिमानं कथितं मुनीन्द्रैः ।।४६।।**
**ग्राह्यं सगर्भं यदि मध्यदेशे तथापि चाग्निनृपचौरभीतिः ।**
**उद्बन्धनं घातविघातमेव इदं हि वाक्यं कथितं वसिष्ठैः ।।४७।।**

अंग-वंग-कलिङ्ग-सौराष्ट्र-मगध-मरुस्थल-जलस्थल (तराई) सिन्धुपर्वत न स्थानों में पिण्ड के अन्दर भित्ति होनी चाहिए। यदि मध्य देश में गर्भमात्र लिया जाय, तो नृप-अग्नि-चोर-उद्बन्धन-घात-प्रघात का भय है। यह वसिष्ठ प्रभृति मुनीन्द्रों का मत है ॥४६-४७॥

विशेषस्तत्रैव नारदः–

**केचिद्वदन्ति दैवज्ञा गर्भमानं गृहं शुभम्।**
**गृहं हि भित्तिसहितं श्रेष्ठं देवर्षिसम्मतम्।।४८।।**

देवर्षि नारद जी के अनुसार भित्ति पिण्ड के अन्दर ही होनी चाहिए, अन्यथा[1] क्षीणदोष होता है; क्योंकि भित्ति ही सीमा का निर्धारण करती है ॥४८॥

गृहस्योपस्करे कालिदासः–

**उलूखलं पिष्टयन्त्रमग्निस्थानं [2]जलाशयम्।**
**वेश्मनो दक्षिणे भागे (पार्श्वे) पितृणां पादशौचनम्।।४९।।**

ओखर-जाँता-शील-जलस्थान-अग्निस्थान व पितृपूजन-स्थान गृह के दाहिने भाग पार्श्व में होना चाहिए ॥४९॥

**।। इति हस्तलक्षणं नामैकविंशतितमं सोपानम् ।।**



१. अनेक विकल्पों को देखते हुए नारद जी का मत आर्ष बहु, प्रमाणित होने से इसी का व्यवहार सद्गृही को करना चाहिए ।

२. जलाशय के लिए पूर्वोक्त विशेष नियमों का पालन करना चाहिए; क्योंकि जलादिपरक विहित है। यह सामान्य नियम है, यथाकथंचित् शुभ सम्भव है ।

## अथ शालाविवेचनं नाम द्वाविंशतितमं सोपानम्

तत्रैकाद्यनेकशाला: सभेदा भवन्ति, तत्रैकशाललक्षणं समुपस्थाप्यते। तत्र प्रस्तारो मुहूर्तगणपतौ–

**विन्यस्य चतुरं पूर्वं गुरून् वर्णान् यथाविधि।**
**एभ्य एव प्रसूयन्ते भेदाः षोडशवेश्मनाम्।।१।।**

प्रस्तार में गुरु, लघु आवश्यक है; क्योंकि इन्हीं प्रस्तारों से भवन के सोलह भेद उत्पन्न होते हैं। भेद लक्षण, चार पंक्तियों में प्रथम चार गुरु का न्यास कर ततः गुरु के नीचे लघु संकेतों के माध्यम से लिखने पर अन्तिम पंक्ति में सर्वत्र लघु हो जाता है, जो पहले उद्धृत है ॥१॥

**विद्यादलिन्दान् सर्वेषु लघुस्थानेषु पण्डितैः।**
**सव्यावर्तं गृहमुखादेतांश्च विनियोजयेत्।।२।।**
**एषामलिन्दसंयोगाद् भवनानां पृथक्-पृथक्।**
**नामानि गुणदोषाश्च वक्ष्यन्तेऽनुक्रमादतः।।३।।**

पूर्वप्रस्तार के अनुसार लघुस्थानों में अलिन्द व गृह के मुख का वामावर्त से विनियोग किया जाय। इन अलिन्दों के योग से भवनों की पृथक्-पृथक् संज्ञा, गुण व दोष प्रतिपादित हैं, जिससे अनुक्रम से कहा जायेगा ॥२-३॥

प्रस्तारालिन्दोत्पन्नभेदा:–

**ध्रुवं धान्यं जयं नन्दं खरं कान्तं मनोरमम्।**
**सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम्।।**
**आक्रान्तं विपुलं चैव विजयं गृहमुत्तमम्।।४।।**

प्रस्तारोत्पन्न गृह के क्रम से ध्रुव-धान्य-जय-नन्द-खर- कान्त-मनोरम-सुमुख-दुर्मुख-क्रूर-सुपक्ष-धनद-क्षय-आक्रान्त-विपुल व विजय ये सोलह नाम हैं ॥४॥

एतेषां फलम्–

**ध्रुवे जयमवाप्नोति धान्ये धान्यागमो भवेत्।।५।।**
**जये सपत्नाञ्जयति नन्दे सर्वाः समृद्धयः।**
**खरे स्यादापदं वेश्म कान्ते च लभते श्रियम्।।६।।**

**आयुरारोग्यमैश्वर्यं तथा वित्तस्य सम्पदः।**
**मनोरमे मनस्तुष्टिर्गृहभर्तुः प्रकीर्तिता ।।७।।**
**सुमुखे राज्यसन्मानं दुर्मुखे कलहः सदा।**
**क्रूरे व्याधिभयं क्रूरं सुपक्षं गोत्रवृद्धिदम् ।।८।।**

ध्रुव नाम वाले गृह में विजय, धान्य में धान्यवृद्धि, जय में शत्रुनाश, नन्द में सकल सम्पदा प्राप्त हो, खर में आपत्ति, कान्त में श्रीप्राप्ति, मनोरम में आयुष्य-आरोग्य-धन की वृद्धि व सर्वदा मन की प्रसन्नता विद्यमान रहे, सुमुख से राज्य-सम्मान, दुर्मुख में कलह, क्रूर में व्याधिभय, सुपक्ष में गोत्र की वृद्धि होती है ॥५-८॥

**धनदे हेमरत्नानि गाश्चैव लभते पुमान्।**
**क्षयं सर्वक्षयं गेहमाक्रन्दं ज्ञातिमृत्युदम्।।**
**आरोग्यं विपुले ख्यातिर्विजये सर्वसम्पदः ।।९।।**

धनद नाम वाले गृह में हेमरत्नों तथा गो की प्राप्ति, क्षय में सर्वनाश, आक्रन्द में जातिमृत्यु, विपुल में आरोग्य ख्याति व विजय में समस्त सम्पत्ति रहती है ॥९॥

**यदि धान्ये द्वितीयेऽपि मुख्यालिन्दः प्रयुज्यते ।।१०।।**
**तद् गृहं रम्यनामेह भर्तुः सौभाग्यकारकम्।**
**मुख्यालिन्देन नन्दाख्यं द्वितीयेन सुयोजितम् ।।११।।**
**तच्छ्रीधरमिति ख्यातं तस्मिन् श्रीर्नित्यमाविशेत्।**
**अलिन्दश्चेद् द्वितीयेऽपि कान्तस्यापि निवेशयेत् ।।१२।।**
**मुदितं तद्भवेद् भर्तुर्भूतिकृद्भवनोत्तमम्।**
**सुमुख्यस्य यदालिन्दं वक्त्रेऽन्यो विनिवेशयेत्।।**
**वर्धमानं तदा तत्स्यात् स्वामिलक्ष्मीविवर्धनम् ।।१३।।**

यदि धान्य नाम वाले गृह में दूसरा मुख्यालिन्द किया जाय, तो वह रम्य नाम का गृह होता है, इसमें सौभाग्य की वृद्धि होती है। नन्द नाम के गृह में ही दूसरा मुख्यद्वार करने पर वह नन्द नाम का गृह श्रीधर नाम से प्रयुक्त है, इसमें लक्ष्मी सदैव निवास करती हैं। कान्त नामक गृह में दूसरा मुख्यद्वार करने पर मुदित नाम से विश्रुत नाम का गृह भूति करने वाला उत्तम गृह कहा जायेगा एवं सुमुख में दूसरे की योजना से वर्धमान नाम का गृहस्वामी की लक्ष्मी की वृद्धि करता है ॥१०-१३॥

क्रूरं युक्तं द्वितीयेन मुख्यालिन्देन मन्दिरम् ।।१४।।
करालं तद्विजानीयाद् भर्ता तस्य विनश्यति ।
अलिन्देन द्वितीयेन धनदं योजितं पुनः ।।१५।।
[1]सुनाम तद्भवेत्तस्मिन्पशून् पुत्रानवाप्नुयात् ।
आक्रन्दस्य पुरोभागे यद्यलिन्दः कृतोऽपरः ।।१६।।

क्रूर नाम का गृह पुनः अपने द्वितीयालिन्द के मुख से युक्त होने पर कराल नाम का होता है और वह अपने स्वामी का अनिष्टकारी होता है। धनद नाम वाला भवन अपने पक्ष के द्वितीय मुख से युक्त होने पर सुनाभ नाम का होता है, वह पशु व पुत्रों की वृद्धि करता है। आक्रन्द के साथ दूसरा मुख होने पर क्रूर नाम का गृह ध्वांक्ष के समकक्ष है और वह अपने स्वामी के लिए निन्दित है। यह उत्तरार्द्ध अग्रिम श्लोक से सम्बन्धित है ।।१४-१६।।

धनाध्यक्षं गृहं तज्ज्ञा निन्दितं प्रवदन्ति तत् ।
द्वितीयालिन्दघटना विजयस्य मुखे यदि ।।१७।।
तत्समृद्धमिति ख्यातं गृहं स्यात् पुण्यकर्मणाम् ।
यान्युक्तानि ध्रुवादीनि पूर्ववेश्मानि षोडश ।।१८।।
शालाविभागं ज्ञात्वैषां तिर्यक् षड्दारु विन्यसेत् ।
षोडशान्ये च ये [2]भेदाः संज्ञाश्चैषामनुत्तमाः ।।१९।।

विजयमुख वाले गृह में यदि दूसरा मुख किया जाय, तो वह समृद्ध नाम का गृह होता है, ऐसा गृह सञ्चित पुण्यात्माओं के लिए होता है। उपर्युक्त ध्रुवादि नाम से प्रसिद्ध षोडश गृह अपनी शालाओं के अनुसार दारुओं के विन्यास से सोलह अन्य भेद होते हैं,जो निम्न नामों से प्रसिद्ध हैं।।१७-१९।।

सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।
सर्वलाभं विशालं च विलक्षमशुभं शुभम् ।।२०।।
उद्योतं भीषणं शून्यमजितं कुलनन्दनम् ।
नामादिवेश्मनामैषां गुणदोषान् प्रकल्पयेत् ।।२१।।

उपर्युक्त के अनुसार क्रमशः सुन्दर-वरद-भद्र-प्रमोद-विमुख-शिव-सर्वलाभ-विशाल-विलक्ष-अशुभ-शुभ-उद्योत-भीषण-शून्य-अजित-कुलनन्दन ये सोलह नाम होते हैं और अपने नाम के अनुसार इनका गुण व दोष भी समझना चाहिए ।।२०-२१।।

---

१. सुष्ठु नाम भवेत्तस्मिन्निति पाठः साधुः । २. स्युरित्यस्याध्याहारः कर्तव्यः ।

ग्रन्थान्तरम्–

**स्यादलिन्दो लघुस्थाने नालिन्दं गुरुमाश्रितम्।**
**प्राग्दक्षिणैर्गृहद्वारालिन्दैश्च दशषड्विधम्।।२२।।**

पूर्व प्रस्तावित लघु प्रस्तार के अनुसार पूर्वादि प्रदक्षिण क्रम से अलिन्द व द्वार लघुस्थान में करना चाहिए, गुरु के स्थान में कदापि नहीं करना चाहिए। इस प्रकार द्वारालिन्द के भेद से सोलह ध्रुवादि नाम होते हैं ॥२२॥

अन्यो विशेषः–

**ध्रुवसंज्ञं गृहं त्वाद्यं धनधान्यसुखप्रदम्।**
**धान्यं धान्यप्रदं नृणां जयं स्याद्विजयप्रदम्।।२३।।**

प्रथम ध्वज नाम का भवन धन-धान्य व सुख का दाता होता है। द्वितीय धान्य नाम का भवन धन-धान्य से परिपूर्ण रहता है। विजय नाम के गृह में गृहस्वामी की विजय होती है ॥२३॥

**नन्दं स्त्रीहानिदं नूनं खरं सम्पत्तिनाशनम्।**
**पुत्रपौत्रप्रदं कान्तं श्रीप्रदं स्यान्मनोरमम्।।२४।।**

नन्दनामक गृह स्त्रीहानिकारक होता है। खरनाम वाला सम्पत्ति का विनाशक होता है। कान्त नाम का भवन पुत्र-पौत्र की वृद्धि व मनोरम गृह श्री, ऐश्वर्यकारक होता है ॥२४॥

**सुवक्रं भोगदं नित्यं दुर्मुखं विमुखप्रदम्।**
**धनदं धनदं गेहं क्षयं सर्वक्षयप्रदम्।।२५।।**

सुवक्र नाम का भवन अनेक प्रकार के भोग की सामग्रियों को देने वाला है, दुर्मुख नाम का भवन घर के समस्त व्यक्तियों में परस्पर वैमनस्य (एक-दूसरे के विमुख) कराता है, धनद नाम का गृह धन-सम्पत्ति से परिपूर्ण रखता है और क्षय नाम का गृह सभी प्रकार से विनाशकारी होता है ॥२५॥

**आक्रन्दं शोकजनकं विपुलं श्रीयशप्रदम्।**
**विजयं नाम सदनं धनदं विजयप्रदम्।।२६।।**

आक्रन्द नाम का भवन शोककारक, विपुल यशप्रद व विजय नामक सदन धन व विजय देने वाला होता है ॥२६॥

**ध्रुवाख्यं द्वित्रिभूमाद्यं स्यादिदं चेद् धरातले।**
**[१]सुवर्णैः शिखरैः सोऽपि प्रासादैः सर्वभूभुजाम्।।२७।।**

ध्रुव नाम का सदन दो या तीन भौम सुवर्ण शिखर वाला प्रासाद, गृह सभी प्रकार के राजाओं के लिए प्रशस्त है ॥२७॥

**सौधाख्यं सदनं शश्वद् धनधान्यप्रदं सदा।**
**प्रासाद–सदनं शश्वद् धर्माऽऽरोग्यसुखप्रदम्।।२८।।**

[२]सौधशिखर का प्रासाद, भवन सर्वदा धन-धान्य से परिपूर्ण रहता है और यह प्रासाद, भवन धर्म-आरोग्य व सुखकारक होता है ॥२८॥

**पुरतो मण्डपं यस्य तदेव भुवनेश्वरम्।**
**तद्गृहं विश्वरूपाख्यं सर्वसम्पत्प्रदं सदा।।२९।।**

जिस भवन के समाने मण्डप हो वह भुवनेश्वर  न का है, उसे विश्व-रूप भी कहते हैं और वह सर्वसम्पत्ति से विभूषित रहता है ॥२९॥

**धनाख्यं सदनं द्वित्रिचतुःपञ्चादिभूमिकम्।**
**भूतिचन्द्रं महीशानां सुतसम्पत्सुखप्रदम्।।३०।।**

धान्य नाम का सदन दो-तीन-चार व पाँच भौम का भूतिचन्द्र नाम से प्रसिद्ध, महीश राजाओं के लिए सुत-सम्पत्ति व सुख-कारक होता है ॥३०॥

**जयाख्यं नाम सदनं द्वितीयधनुभूमिकम्।**
**पूर्णचन्द्रं [३]महद्गेहं भार्यानाशप्रदं सदा।।३१।।**

जय नामक सदन द्वितीयादि भौम का हो, तो पूर्णचन्द्र नाम से प्रसिद्ध स्त्रीसुखविहीन करता है ॥३१॥

**खरगेहं यदा यत्र द्वितीयधनुभूमिकम्।**
**असुखं नाम सदनं दुःखशोकभयप्रदम्।।३२।।**

खर नाम का गृह द्वितीयादिभूमिक हो, तो उसे असुख नाम से जाना जाता है। यह दुःख, शोक व भयप्रद होता है ॥३२॥

**प्रासादो वाऽथ सौधो वा कान्ताख्यं सदनं यदा।**
**आनन्दसदनं नाम विज्ञानानन्ददं सदा।।३३।।**

कान्त नामक गृह प्रासाद या सौध से युक्त हो तो उसे आनन्द नाम से जाना जाता है । यह विज्ञान व आनन्द का द्योतक होता है ॥३३॥

---

१. सुवर्ण शिखर वाला मंदिर प्रासाद होता है।
२. एक भौम (महल) के सदन को सौध कहते हैं । ३. भवेद् इति भवितव्यम् ।

**प्रासादो वाऽथ सौधो वा सुवक्त्रसदनं यदा।**
**हाटकं सदनं नाम सदा हाटकदं शुभम्।।३४।।**

सुवक्त्र नामक गृह सौध या प्रासाद से युक्त हो, तो उसे हाटक कहते हैं, जो नित्य सुवर्णदायक होता है ॥३४॥

**प्रासादो वाऽथ सौधो वा दुर्मुखं सदनं यदि।**
**दुर्मुखं सदनं नाम सर्वकार्यविनाशकम्।।३५।।**

दुर्मुख सदन प्रासाद या सौध जो भी हो, वह दुर्मुख नाम से प्रसिद्ध व सर्वकार्यविनाशक होता है ॥३५॥

**प्रसादो वाऽथ सौधो वा क्रूराख्यं सदनं यदि।**
**क्रूराख्यं सदनं नाम दुःखशोकप्रदं सदा।।३६।।**

क्रूर नामक गृह सौध या प्रासाद से युक्त हो, तो उसे क्रूर कहते हैं। वह दुःख व शोक देता है ॥३६॥

**प्रासादो वाऽथ सौधो वा धनदाख्यं गृहं भवेत्।**
**धनदाख्यं गृहं नाम धनधान्यसुखुप्रदम्।।३७।।**
**प्रासादो वाऽथ सौधो वा क्षयाख्यं सदनं यदा।**
**क्षयं नाम गृहं तच्च सर्वदा क्षयकारकम्।।३८।।**
**प्रासादो वाऽथ सौधो वा ह्याक्रन्दं सदनं यदा।**
**आक्रन्दं नाम तद्गेहं चौरभीतिभयप्रदम्।।३९।।**
**विपुलाख्यं गृहं यत्र सौधं प्रासाद एव वा।**
**विपुलं नाम सदनं विपुलं धनधान्यदम्।।४०।।**
**विजयाख्यं यदा नूनं सौधं प्रासाद एव वा।**
**विजयं नाम सदनं सर्वदा विजयप्रदम्।।४१।।**

स्पष्टार्था एव इमे श्लोकाः ॥३७-४१॥

**एकशालगृहं नूनं चतुर्द्वारसमन्वितम्।**
**मनोरथप्रदं गेहं नाम्ना तद्विश्वतोमुखम्।।४२।।**

यदि एकशाल गृह का चारों दिशा में द्वार हो, तो वह मनोरथ देने वाला विश्वतोमुख नाम से प्रसिद्ध होता है ॥४२॥

**तदेवान्यमुखैर्युक्तं कोणमध्ये च तद्गृहम्।**
**पुण्डरीकनामकं गेहं सर्वकामफलप्रदम्।।४३।।**

वही एकशाल गृह यदि कोणों के मुखों से भी युक्त हो, तो उसे पुण्डरीक कहते हैं, वह सब कामनाओं को पूरा करने वाला होता है ॥४३॥

एकशालगृहद्वारफलम्–

**पश्चिमद्वारहीनन्तु गृहं स्याच्छ्रीनिधाभिधम्।**
**श्रीप्रदं सर्वदा राज्ञां पुत्रपौत्रप्रदाह्वयम्।।४४।।**
**उदग्द्वारविहीनं तत् सूकराख्यं प्रदाह्वयम्।**
**सूकराद्भयदं नूनमथवा भूपतेर्भयम्।।४५।।**
**पूर्वद्वार–विहीनन्तु तद् व्याघ्रस्य पदं भवेत्।**
**चतुष्पाद्भयदं गेहमथवा तस्कराद्भयम्।।४६।।**
**दक्षिणद्वारहीनन्तु गेहं शेखरसंज्ञकम्।**
**सर्ववस्तुप्रदं तत्तु सर्वरत्नप्रदं सदा।।४७।।**

इत्येकशालभेदाः स्पष्टार्था एव ।।४४-४७।।

द्विशालगृहे सूत्रधारः–

**हस्तिनी महिषी चेति द्वे शाले वेश्मनि।**
**तत्सिद्धार्थमिति ज्ञेयं वित्तसम्पत्तिकारकम्।।४८।।**

द्विशाल गृह में यदि हस्तिनी व महिषी नाम की दो शालाओं से युक्त हो, तो उसे सिद्धार्थ कहते हैं, यह वित्त व सम्पत्तिकारक होता है ।।४८।।

**मृत्युदं महिषि–गावीभ्यां तद्भवेद् यमसूर्पकम्।**
**[१]दण्डं स्याच्छागलीगावीशालाभ्यां दण्डभीतिदम्।।४९।।**

महिषी व गावी से युक्त द्विशाल भवन यम-सूर्प नाम से प्रसिद्ध मृत्युकारक है। छागली व गावी से युक्त द्विशाल दण्डनामक राजभीतिकारक है ।।४९।।

**वातं करेणुच्छागलीयुक्तमुद्वेगकारकम्।**
**महिष्यजाभ्यामुद्वेगकरी च श्रीधनापहा।।५०।।**

हस्तिनी व छागली से युक्त द्विशाल भवन वात नामक उद्वेगकारक, महिषी अजा नाम की शालाओं से युक्त द्विशाल गृह चुल्ही नामक उद्वेग व धननाशक है ।।५०।।

**काचं करेणुगावीभ्यां सुहृत्प्रीतिविनाशनम्।**
**एकमूषममूषं च न द्विशालेषु कारयेत्।।५१।।**
**व्यत्यासात्काचचुल्ह्याश्च सर्वाभिः स्मृतिभिस्तथा।**
**चत्वार्यन्यानि भिद्यन्ते लघुप्रस्तारयोगिनः।।५२।।**

करेणु व गावी से युक्त द्विशाल काच नामक मित्रद्रोहकारक होता है, द्विशाल गृह एक मूषा या मूषाविहीन होने पर अशुभ है, अर्थात् एक मूषा या मूषाविहीन द्विशाल नहीं होना चाहिए ।।५१-५२।।

---

१. द्वार व अलिन्द का निम्न नाम होता है–पूर्व हस्तिनी, दक्षिण महिषी, पश्चिम गावी व उत्तर छागली।

*एवमत्र सिद्धार्थ-यमसूर्प-दण्ड-वात-चुल्लीकाचनामकं द्विशालगृहे प्रत्येकस्य एकादश-एकादश भेदा भवन्ति, तत्र यथासम्भवं प्रस्तूयते ।*

अथ द्विशालवेश्मनामलक्षणे वराहः–

**सिद्धार्थमपरयाम्यं यमसूर्पं पश्चिमोत्तरशाले ।**
**दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्ये ।।५३।।**

श्रीवराह के अनुसार पश्चिम-दक्षिण शालाओं से युक्त भवन सिद्धार्थ नामक होता है। पश्चिम व उत्तर शालाओं से युक्त यमसूर्प नाम से प्रसिद्ध है, उत्तर व पूर्वशाला युक्त द्विशाल दण्डनामक व दक्षिण-पूर्व से युक्त वात नामक द्विशाल होता है ।।५३।।

**पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम् ।।**

पूर्वापर (पश्चिम-पूर्व) दोशाला गृह चुल्ली व दक्षिण-उत्तर शाला युक्त द्विशाल काच नाम का है ।

एतेषां फलञ्च तत्रैव–

**सिद्धार्थेऽर्थावाप्तिर्यमसूर्पे गृहपतेर्मृत्युः ।**
**दण्डवधो दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये ।।५४।।**

सिद्धार्थ नामक द्विशाल में अर्थ की प्राप्ति, यमसूर्प में स्वामी की मृत्यु, दण्ड में राजदण्ड से वध, वात में निरन्तर कलह व उद्वास होता है। चुल्ली में वित्तविनाश, काच में बन्धन व विरोध होता है ।।५४।।

एवमेव त्रिशाललक्षणादि तत्रैव–

**उत्तरशालाहीनं त्रिशालं हिरण्यनामकं स्यात् ।**
**प्राक्शालावियुक्तं सुक्षेत्रं वृद्धिदं वास्तु ।।५५।।**
**याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत् ।**
**पक्षघ्नमपरयाम्यवर्जितं सुतध्वंसकरं वैरम् ।।५६।।**

उत्तरशालाहीन त्रिशाल गृह हिरण्य नामक, प्राक्शालारहित सुक्षेत्र, ये दोनों वृद्धिकारक हैं और याम्यशालाविहीन त्रिशालगृह चुल्ली, धन-हानिकारक है, पश्चिमशालाविहीन त्रिशाल पक्षघ्न नामक सुतनाश व वैरोत्पादक होता है ।।५५-५६।।

द्विशालगृहे वैशिष्ट्यं मतान्तरे–

**याम्यपश्चिमयोर्नूनं द्विशाला तु [१]कमलाकरा ।**
**नामतः सर्वदा नृणां श्रीप्रदा सर्वभोगदा ।।५७।।**

---

१. द्विशालन्तु कमलाकरम् इति भवितव्यम् ।

**पश्चिमोत्तरयोः शालाश्वापदं नाम विश्रुतम्।**
**शत्रुभ्यो भयदं शश्वदथवा चौरभीतिदम्।।५८।।**
**पूर्वदक्षिणयोर्नूनं द्विशाला सर्पदंष्ट्रिका।**
**आधिव्याधिभयं शश्वद् व्यालचौरभयप्रदा।।५९।।**

प्रकारान्तर वचनों के अनुसार दक्षिण-पश्चिम दोशाला युक्त गृह कमलाकर नामक लक्ष्मी व सर्वभोगदायक है। पश्चिम-उत्तर शाला श्वापद नाम का निरन्तर शत्रु व चोर भयदायक है, पूर्व-दक्षिण की शाला सर्पदंष्ट्रा नाम की है, इसमें आधि-व्याधि सर्प व चौरभय होता है ॥५७-५९॥

निष्कर्षो द्विशालगृहे तत्रैव–

**प्रासादो वाऽथ सौधो वा तस्यामेव तु कारयेत्।**
**अन्यदिक्षु द्विशालासु गृहे शोकं लभेन्नरः।।६०।।**

द्विशाल गृह में जिस दिशा में द्वार शुभ है, उसके विपरीत द्वार सर्वदा शोकप्रद होता है ॥६०॥

**तस्माद्द्विशालं त्वत्र सर्वथा परिवर्जयेत्।।**

द्विशाल गृह के विवादों से उत्तम यही है कि द्विशाल गृह निर्माण न करना ही उत्तम है ।

**अत्र विशेषः–** त्रिशालादिगृहलक्षणं श्रीवराहेणोक्तं तत्र पुनः द्वारालिन्दभेदेन पञ्चभेदाः प्रोक्ताः। श्रीवसिष्ठेन केवलं द्वारवशेनैव भेदाः प्रतिपादिताः। अत्रेदं निष्पद्यते यत् सदनसंज्ञाबोधने द्वारस्यैव मुख्यता वर्तते, अलिन्दस्तु गृहस्य शोभातिशायकं मन्यते, तेनात्र द्वारवशेनैव भेदा ज्ञातव्या इति निश्चीयते। द्वारवशेनैव चतुःशालगृहस्य नाम फलं च–

**कुर्यात्पूर्वमुखं गेहं गृहराडिति विश्रुतम्।**
**सर्वसम्पत्प्रदं तत्स्याद् याम्यवक्त्रं कुबेरकम्।।६१।।**
**शश्वत्कुबेरगृहवदालयं सर्वसम्पदाम्।**
**अभिप्रत्यङ्मुखं चैव मन्दिरं पदमैन्द्रकम्।।६२।।**
**इन्द्रवेश्म यथा सद्म सर्वसम्पद्युतं सदा।**
**माहेन्द्रं तद्विजानीयात् सर्वैश्वर्यविभूषितम्।।६३।।**
**उदङ्मुखं तत्सदनं वारुण्यं पदसंज्ञकम्।**
**सर्वरत्नालयं गेहं सर्वभोगसुखावहम्।।६४।।**

उपर्युक्त लग्नों में स्थिर लग्न व सूर्यादि ग्रह, गृहारम्भोक्त स्थानों में व विहित नक्षत्रों में दिग्द्वारभ नक्षत्र प्रवेश में शुभ होता है। वाम रवि पूर्ववत् होना चाहिए ॥३२॥

रामश्च–

**एवं सुलग्ने स्वगृहं प्रविश्य वितानपुष्पश्रुतिघोषयुक्तम् ।**
**शिल्पज्ञदैवज्ञविधिज्ञपौरान् राजार्चयेद् भूमिहिरण्यवस्त्रैः ।।३३।।**

उपर्युक्त शुभ मांगलिक समय आधुनिक पुष्पमाला-तोरण प्रभृति से गृह को अलंकृत करके सदन में मांगलिक गीत-वेदमन्त्रों की ध्वनि के साथ प्रवेश करके शिल्पी-दैवज्ञ-विधिज्ञ-ग्राममुख्य का सुवर्ण-वस्त्र व मिष्ठान्न से सम्मान करना चाहिए ॥३३॥

अस्तापवादो ज्योतिःप्रकाशे–

**अस्तदोषोऽत्र न ग्राह्यः प्रतिदैवसिको बुधैः ।**
**नास्तदोषः सदा भानोर्न मैत्रेऽब्जस्य नीचता ।।३४।।**

प्रतिदैविक नित्यप्रति किये जाने वाले व देवादि वार्षिकोत्सव कार्यों में अस्तदोष नहीं देखा जा सकता है। सूर्य का अस्त गुरु-शुक्र के अस्त दोष की भाँति त्याज्य नहीं है, और अनुराधा के चन्द्र में नीचत्व दोष नहीं होता है ॥३४॥

वेधे च वास्तुप्रदीपे–

**अदर्शनेन दीवारे दूरे वा समभूमिषु।**
**न वेध्यन्ते गृहान् सर्वे यथोक्तदिशि संस्थिताः ।।३५।।**

वेधकारक वस्तु यदि किसी दीवार के बाद अर्थात् दीवार आवरण में हो अथवा किसी भी पदार्थ का आवरण हो अथवा समतल धरातल पर भी दूरान्तर (द्विगुणित ऊँचाई के) अन्तर होने पर प्रभाहीन होता है। अर्थात् वेधकारक नहीं होता है ॥३५॥

**अकृत्वा वास्तुपूजां यः प्रविशेन् नवमन्दिरम्।**
**रोगान् नानाविधान् क्लेशान् प्राप्नुयात्सर्वसङ्कटम् ।।३६।।**

वास्तुपूजन के पूर्व नवमन्दिर में प्रवेश से रोग-व्याधि-क्लेश व अनेकों संकटों का भी भय रहता है ॥३६॥

प्रवेशे व्यवहारतत्त्वे–

**सौम्यायने श्रावणमार्गपौषे जन्मर्क्षलग्नोपचयोदयांशे ।**
**वामं गतेऽर्के गृहवास्तुपूजां कृत्वा विशेद्वेश्मभकूटशुद्धम् ।।३७।।**

इस पद्य के अनुसार सौम्यायन तथा श्रावण-पौष व मार्गशीर्ष मास भी प्रवेश में विहित हैं; किन्तु यह तीनों प्रवेश के लिए सामान्य वचन है, साथ ही जन्मराशि व जन्मलग्न से उपचय राशि व अंश वामरवि व भकूट शुद्धि के दिन वास्तुपूजा करके गृहप्रवेश शुभ होता है ॥३७॥

नारदश्च–

**प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः ।**
**माघ–फाल्गुन–वैशाख–ज्येष्ठमासेषु शोभनः ।।३८।।**

मार्गशीर्ष-कार्तिक मास मध्यम व माघ-फाल्गुन-वैशाख व ज्येष्ठ प्रवेश में उत्तम है। यह नव भूमि-भवन के लिए है ॥३८॥

**शुभः प्रवेशो देवेज्य–दैत्ययोर्दृश्यमानयोः ।**
**वस्विज्य–वारुणस्वाती–दस्रमैत्र–स्थिरोडुषु ।।३९।।**

शुक्र-गुरु उदय हो, धनिष्ठा-पुष्य-शतभिषा-स्वाती-अश्विनी-अनुराधा व स्थिर नक्षत्रों में प्रवेश शुभ होता है। यह प्रवेश तीनों प्रवेशों के लिए है ॥३९॥

**यद्दिङ्मुखं गृहद्वारं तद्द्वारर्क्षे गृहं विशेत् ।**
**सूर्यारवारौ रिक्तामाकुयोगानपि सन्त्यजेत् ।।४०।।**

जिस दिशा का द्वार हो उसी दिशा के दिग्द्वार नक्षत्रों के अन्दर विहित नक्षत्रों में रवि-मंगल का दिन रिक्ता-अमा तिथि व कुयोगों को छोड़ प्रवेश करना चाहिए ॥४०॥

पुनर्नारदः–

**व्यर्कारवारतिथिषु रिक्तामावर्जितेषु च ।**
**दिवा वा यदि वा रात्रौ प्रवेशो मङ्गलप्रदः ।।४१।।**

तत्र विशेषो वसिष्ठः–

**दिवा प्रवेशः शुभदः सपुत्रपौत्राभिवृद्ध्यै निशि भास्करेन्दोः ।**
**बलेन मत्स्यध्वजवासराख्यं रात्रिं बिना सूर्यदिने च रात्रिम् ।।४२।।**
**दह्यतेऽत्र दिशायां च मन्दिरं वह्निनेन्द्रशिखिवह्निभयोऽत्र ।**
**ब्रध्नभूमिसुतवासरेषु च क्षीण-रश्मिदिवसे न वृद्धिदम् ।।४३।।**

रवि-मंगल-रिक्ता-अमा तिथि को छोड़कर दिन या रात्रि में प्रवेश मांगलिक होता है; किन्तु वसिष्ठ के मत से दिन का प्रवेश पुत्र-पौत्र व ऐश्वर्य की वृद्धि का कारक होता है; परन्तु अति आवश्यक होने पर सूर्य व सोम के बल से रात्रि में भी प्रवेश कर सकते हैं; किन्तु क्षीणचन्द्र व सूर्य के दिन की रात्रि छोड़कर प्रवेश यथाकथञ्चित् सम्भव है ।

**अपि च–** कृत्तिका-विशाखा व ज्येष्ठा नक्षत्रों में व रवि-मंगल के दिन प्रवेश से अग्निभय होता है; किन्तु सोम के दिन प्रवेश वृद्धिकारक होता है। यह पूर्व श्लोक रवि व क्षीणचन्द्र की रात्रि व दिन सम्बन्धी विहित का निषेधक निष्कर्ष वचन है ।।४१-४३।।

अन्यदपि–

**चन्द्रजार्यसितवासरेषु च श्रीप्रदं सुतमहार्थलाभदम् ।**
**सूर्यसुनुदिवसे स्थिरप्रदं किन्तु चौरभयमत्र विद्यते ।।४४।।**

बुध-गुरु व शुक्र का दिन प्रवेश में पुत्र-यश व महत्त्वार्थ की सिद्धि का कारक होता है; किन्तु शनि का दिन स्थिरता देते हुए भी चोरभय-कारक है ।।४४।।

शार्ङ्गधरः–

**पुष्ये मैत्रे मृगे स्वात्यां ध्रुवे त्वाष्ट्रेऽर्कपूषभे ।**
**प्रवेशे वारुणे शस्ते गृहग्रामप्रवेशनम् ।।४५।।**

पुष्य-अनुराधा-मृगशिरा-स्वाती-ध्रुवगण-चित्रा-स्वाती-नक्षत्र गृह व ग्राम प्रवेश में शुभ माने गये हैं, यह त्रिविध प्रवेश के निमित्त सामूहिक विवरण है ।।४५।।

तत्रैव विशेषः–

**प्रविशेन्नूतनं हर्म्यं ध्रुवमैत्रैः सुखाप्तये ।**
**पुष्यस्वातियुतैस्तैश्च जीर्णन्तु वासवत्रये ।।४६।।**

नूतन गृहप्रवेश में ध्रुवगण-नक्षत्र व मित्रगण सुख व वृद्धिकारक हैं और उन्हीं नक्षत्रों के साथ पुष्य-स्वाती-धनिष्ठा व शतभिष नक्षत्रों में जीर्णगृह प्रवेश शुभ होता है ।।४६।।

ज्योतिःप्रकाशे–

**गृहारम्भोदितैर्मासैर्धिष्ण्यैर्वारैर्विशेद्गृहम् ।**
**विशेत् सौम्यायने हर्म्यं तृणागारे तु सर्वदा ।।४७।।**

स्पष्टम् ।।४७।।

राजमार्त्तण्डे–

**प्रवेशो नूतने गेहे अपूर्व इति कथ्यते।**
**सपूर्वस्तु प्रयाणान्ते पूर्वापूर्वोऽन्य उच्यते।।४८।।**

नूतन गृह के प्रवेश को अपूर्व व यात्रावसान प्रवेश को सपूर्व व इससे भिन्न जीर्णगृह प्रवेश को पूर्वापूर्व अथवा द्वन्द्वाभय प्रवेश कहते हैं ।।४८।।

ज्योतिष्प्रकाशे च–

**अपूर्वसंज्ञं प्रथमं प्रवेशं यात्राऽवसाने च सपूर्वमेतत्।**
**द्वन्द्वाह्वयं चाग्निभयादिजातं गृहप्रवेशं त्रिविधं वदन्ति।।४९।।**

नूतन भूमि व नूतन गृह के प्रवेश को अपूर्व व यात्रावसान के प्रवेश को सपूर्व तथा अग्नि प्रभृति पञ्चभूतों से विलीन व पुनः नवनिर्मित गृहप्रवेश को द्वन्द्वाभय या दूसरे शब्दों में पूर्वापूर्व प्रवेश भी कहते हैं ।।४९।।

रत्नकोशे–

**[1]सर्वग्रहैर्विमुक्तं प्रवेशभं प्रशस्यते प्रयत्नेन।**
**केचित्सौम्यसमेतं शुभदं कीर्तितं मुनिभिः।।५०।।**

प्रवेश में विहित नक्षत्रों में भी यदि कोई नक्षत्र किसी ग्रह से विद्ध या युक्त हो, तो उसे प्रवेश में छोड़ देना चाहिए; किन्तु कतिपय मुनियों के मत में शुभग्रहयुक्त नक्षत्र ग्राह्य भी हो सकता है ।।५०।।

प्रवेशे लग्नफलं भूपालवल्लभे–

**मेषे यानं घटे व्याधिर्धान्यहानिर्मृगे गृहम्।**
**विशतां कर्कटे नाशः शेषलग्नेषु शोभनम्।।५१।।**

मेषलग्न के प्रवेश में यात्रा निरन्तर बनी रहती है। अर्थात् प्रवास होता है। तुला में व्याधि, मकर से धान्यहानि व कर्क में सर्वनाश की स्थिति उत्पन्न हो जाती है, अन्य लग्न शुभ है ।।५१।।

दैवज्ञवल्लभे–

**निन्दिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः ।**
**कर्तुरौपचयगाश्च विलग्ने राशयः शुभफलाश्च भवन्ति।।५२।।**

प्रवेश में निन्दित मेष-तुला-कर्क व मकर लग्न भी यदि कर्ता के जन्मराशि व लग्न से उपचय ३।६।१०।११ इन संख्यायों में हो और शुभग्रहों से युक्त हो, तो प्रवेश शुभफलदायक होता है ।।५२।।

---

१. सर्वग्रहैर्विनिर्मुक्तं प्रवेशे शुभदं भवेत् ।
केचित्सौम्यसमेतं यं शुभदं स्यात्प्रवेशने ।। इति भवितव्यम् ।

लल्लस्तु–

**व्याधिहा[1] धनहा चैव वित्तदो बन्धुनाशकृत्।**
**पुत्रहा शत्रुहा स्त्रीघ्नः प्राणहा विटकप्रदः[2] ।।५३।।**
**सिद्धिदो धनदश्चैव [3]भवेत्तज्जन्मराशिगः[4] ।**
**लग्नस्थः क्रमशो राशिर्जन्मलग्नात् प्रवेशने।।५४।।**

जन्मलग्न व जन्मराशि से यदि प्रवेश लग्न में क्रमशः प्रथमादि राशि हो तो निम्न फल होता है ।

यदि प्रथम राशि प्रवेशलग्न में हो तो रोग देने वाला होता है। द्वितीय में धन-हानि, तृतीय में धनलाभ, चतुर्थ में बन्धुविनाश, पञ्चम में पुत्रहानि, षष्ठ में शत्रुनाश, सातवीं राशि में स्त्रीनाश, आठवें में प्राणहानि, नवम में पिटक-रक्तविकृति, दशवीं राशि सिद्धिदात्री, ग्यारहवीं धन देने वाली व बारहवीं व्ययकारिणी होती है ॥५३-५४॥

प्रवेशलग्ने सूर्यादिग्रहाणां फलं ज्योतिष्प्रकाशे–

**सौदामिन्यादिभिर्भङ्गं कुर्याद् भानुर्विलग्नगः ।**
**धनेऽन्नकार्श्यबाहुल्यं सहजे श्रीसुखोदयम्।।५५।।**
**सुखसंस्थः सुहृद्वैरं सुतपीडां सुतस्थितः ।**
**[5]षष्ठः कुर्यात्सुखारोग्यं कान्तावैरं च सप्तगः।।५६।।**
**रन्ध्रस्थोऽर्को मृतिं कुर्याद्धर्मे धर्मक्षयं रविः ।**
**खस्थो मध्यं सुखं कुर्यादायगो व्ययगः क्षतिम्।।५७।।**

प्रवेश लग्न के द्वादशभावों में गत रवि का क्रमशः फल–प्रवेश लग्नस्थ सूर्य में विद्युत् प्रभृति दाहक पदार्थों से गृह का नाश होता है । धनस्थ के सूर्य में अन्न का भयंकर अभाव, तृतीय में श्री व सुख की वृद्धि, चतुर्थ में मित्रवैर, पञ्चम में पुत्रपीड़ा, षष्ठस्थ सूर्य सुख व आरोग्य देता है। सप्तमस्थ स्त्री-विरोध, अष्टमस्थ प्राणहानि, नवमस्थ धर्महानि, दशमस्थ सामान्य, लाभस्थ लाभदाता व व्ययस्थ हानिकारक होते हैं ॥५५-५७॥

चन्द्रः–

**आषण्मासाद्विधुर्लग्ने नाशं कुर्याज्जलादिभिः ।**
**धनस्थोऽर्थं तृतीयस्थः सौभाग्यं वेश्मगः सुखम्।।५८।।**

---

१. व्याधिहा = व्याधिदा । २. विटक = फोड़ाफुन्सी कृत । ३. भवेद् = व्ययदा ।
४. जन्मराशिगः = जन्मराशित इति भवितव्यम् । ५. षष्ठस्थः सुखमारोग्यम् ।

**धीस्थो धियं कृशो भ्रान्तिः षष्ठः क्षीणोऽरिभङ्गकृत्।**
**कामगस्तनुते भोगाच्छिद्रस्थो मृत्युमाशु च।।५९।।**
**अक्षीणो नवगः सौख्यं दद्यात्स्वस्थः पदं तथा।**
**लाभगो रत्नवस्त्राप्तिं दारिद्र्यं व्ययगः शशी।।६०।।**

पूर्ववत्प्रवेशलग्नस्थ चन्द्रमा ६ मास के अन्दर जलवायु से गृह का नाश करते हैं । धन में अर्थहानि, तृतीय में सौभाग्य, चतुर्थ में सुख, पंचम में बुद्धिदोष व भ्रान्ति, षष्ठस्थ क्षीणचन्द्र शत्रुनाशक, सप्तमस्थ सुखभोगादि सिद्धि, अष्टमस्थ शीघ्र मृत्युभय, पूर्णचन्द्र नवम में धर्म सुखद, दशमस्थ पद-प्रतिष्ठा, लाभस्थ रत्नादि वस्त्रप्राप्ति व व्ययस्थ चन्द्र दरिद्रता करते हैं ॥५८-६०॥

मंगल–

**सद्मनाशं कुजः कुर्याल्लग्नगो ज्वलनादिना।**
**नेत्ररोगञ्च भूलाभं सहजेऽरिभयं सुखे।।६१।।**
**विषशत्रुभयं पुत्रे यशोवृद्धिं रिपौ कुजः।**
**भार्यानाशं स्मरे कुर्याद्रन्ध्रे शस्त्रात्कुलक्षयः।।६२।।**
**विघ्नं धर्मस्थितः कुर्यात्कर्मनाशं च कर्मगः।**
**लाभगोऽम्बरहेमाप्ती राजदण्डं व्यये कुजः।।६३।।**

प्रवेश लग्न में मंगल यदि लग्न में हो तो अग्नि, वायु से गृहनाश होता है। द्वितीय में नेत्ररोग, तृतीय में भूलाभ, चतुर्थ में शत्रुभय, पञ्चम में विष व शत्रु से भय, षष्ठ में यश की वृद्धि, सप्तम में स्त्रीहानि, अष्टम में शस्त्र प्रहार से कुल की हानि, नवम में विघ्न, दशम में कर्म की हानि, लाभ में वस्त्र सुवर्ण की प्राप्ति व व्यय में राजदण्ड होता है ॥६१-६३॥

बुधफलम्–

**आरोग्यं लग्नगे सौम्ये कोशेऽर्थः सहजे सुखम्।**
**सुखे भोगः सुते विद्या रिपौ शत्रुक्षयो भवेत्।।६४।।**
**द्यूने सौभाग्यमायासो रन्ध्रे धर्मे महद्यशः।**
**खगो ज्ञे राजसन्मानो लाभे द्रव्यं व्यये व्ययः।।६५।।**

बुध प्रवेश लग्न में आरोग्य, द्वितीय में अर्थलाभ,तृतीय में सुख,चतुर्थ में भोगावाप्ति,पंचम में विद्यावृद्धि,षष्ठ में शत्रुनाश,सप्तम में सौभाग्य की

वृद्धि,अष्टम में अधिक श्रम करने होते हैं। धर्म में यशोवृद्धि,दशम में राजसम्मान की प्राप्ति,लाभ में द्रव्यलाभ व व्यय में व्यय होता है।।६४-६५।।

गुरुः–

**आयुर्धनं तनौ ·जीवे धने श्रीरनुजे सुखम्।**
**सुखे स्थैर्य्यं चिरं पुत्रे पुत्रवृद्धिर्यशो रिपौ।।६६।।**
**स्मरे भोगोऽष्टमे मध्यो धर्मगः सिद्धिदो गुरुः।**
**व्योम्नि राज्यं धनं लाभे व्यये भवति सिद्धिदः।।६७।।**

गुरु प्रवेश लग्न में धन व यश, धन में श्री, तृतीय में सुख, चतुर्थ में चिर स्थायित्व, पुत्रस्थान में पुत्र की वृद्धि, षष्ठस्थ यश, सप्तम में भोगावाप्ति, अष्टम में सामान्य, धर्म में सिद्धि की प्राप्ति, दशम में राज्यसुख, लाभ में धन व व्यय में सिद्धि प्रदान करते हैं ।।६६-६७।।

शुक्रः–

**लग्ने शुक्रो निधिं दद्यात्कोशे वित्तमथानुजे।**
**मान्नोन्नतिं सुखे धैर्यं वंशवृद्धिं सुते स्थितः।।६८।।**
**रिपौ मध्योऽस्तगः कुर्यात्स्त्रीलाभं मध्यमोऽष्टगः।**
**तपस्यन्नं पदे राज्यं लाभे श्रीः सद्व्ययो व्यये।।६९।।**

प्रवेश लग्न में निधि, धन में धन, तृतीय में सम्मान, चतुर्थ में धैर्य, पाँचवें में पुत्रवृद्धि, षष्ठ में सामान्य, सात में स्त्रीलाभ, आठवें मध्यम, नवें अन्न का प्राचुर्य, दशम में राज्यसुख, लाभ में श्री व व्यय में सद्व्यय करते हैं ।।६८-६९।।

शनिः–

**गृहभङ्गं शनौ लग्ने नृपकोपात्प्रकीर्तितः।**
**धने बन्धुजनाद्धानिः सहजस्थे धनागमः।।७०।।**
**सुखे सीमोद्भवं वैरं पुत्रे पुत्रात्पराभवः।**
**षष्ठे शत्रुजनध्वंसः कलत्रे दारदूषणम्।।७१।।**
**छिद्रेऽस्त्रादिभयं घोरं धर्मे प्रीतिः कुकर्मणि।**
**मध्ये मन्दो गृहं शून्यं श्रीलाभे व्यसनं व्यये।।७२।।**

प्रवेश लग्न में शनि हो तो राजकोप से गृह नष्ट होता है। धन' में बान्धव नाश के कारण होंगे, तृतीय में धनलाभ, चतुर्थ में सीमाकृत वैर (गृहसीमा), पंचम में पुत्रकृतापमान,षष्ठ में शत्रु का नाश,सप्तम में स्त्रीदोष,

अष्टम में भयंकर शस्त्रभय, नवम में कुकर्म में प्रीति, दशम में गृह निस्तेज व जनरहित हो, लाभ में श्रीप्राप्ति व व्यय में व्यसन बढ़ता है ॥६७-७२॥

राहुः–

**अहेर्वासोऽङ्गे राहौ केतौ भूतादिभीर्गृहे।**
**शेषभावफलं ज्ञेयं राहुकेतोरिनारवत्॥७३॥**

प्रवेश लग्न में राहु से गृह में सर्पवास व केतु से भूतप्रेतादि का वास होता है। शेष भावों का फल सूर्य व मंगल जैसा ही होता है ॥७३॥

भावशुद्धौ तु–

**जामित्र–शुद्धिमुद्वाहे व्रते भाव्यन्तु पञ्चमम्।**
**यात्रायामष्टमं तद्वत्पातालं च प्रवेशने॥७४॥**

विवाह में सप्तम भाव, व्रत में पञ्चम, यात्रा में अष्टम व गृहप्रवेश में चतुर्थ भाव की शुद्धि होनी चाहिए ॥७४॥

बृहन्मार्त्तण्डे–

**केन्द्रत्रिकोणगृहगैर्बुधजीवशुक्रैः**
**पापैस्त्वयुक्तिनिधनव्ययकर्मगैश्च ।**
**[1]ग्राम्ये स्थिरेऽप्युपचये स्वयजन्मलग्ने**
**लग्नाच्छशी ह्युपचये प्रविशेत्स्ववेश्म॥७५॥**

श्रीपतिः–

**त्रिकोणकेन्द्रगैः शुभैरकण्टकाष्टमीत्यगैः।**
**असद्ग्रहैः स्थिरोदये गृहं विशेद्बले विधौ॥७६॥**

रत्नमालायाम्–

**कृत्वा विप्रान्सजलकलशमग्रतो वामतोऽर्कं**
**स्नातः स्रग्वीविमलमनसां मङ्गलैर्वेदघोषैः।**
**व्यस्तैर्यात्राकथितशकुनैर्द्वारमार्गेण राजा**
**दर्भ्यं पुष्पप्रचुररचितं तोरणाढ्यं विशेद्वा॥७७॥**

वास्तुशास्त्रे–

**लग्नात्प्रागादितो दिक्षु द्वौ द्वौ राशी नियोजितौ।**
**एकमेकं न्यसेत्कोणे सूर्यं वामे विचिन्तयेत्॥७८॥**

---

१. लग्ने इति भवितव्यम्।

ज्योति:प्रकाशे तु–

रन्ध्रात्पुत्राद् धनाल्लाभात् पञ्चस्वर्के स्थिते क्रमात्।
पूर्वाशादिमुखं गेहं विशेद्वामो भवेद् यतः ।।७९।।
विवाहे व्रतबन्धेऽन्नप्राशने चाभिषेचने।
सीमन्तेऽप्यरिगे चन्द्रो नेष्टः शेषे त्वगर्हितः ।।८०।।

ज्योतिषार्णवे–

केन्द्रत्रिकोणद्विपदेषु[1] पापाः कुर्वन्ति भीतिं बहुधा क्षतिं च ।
हानिं व्ययस्था मरणं मृतिस्था रोगं स्वदेशाद्गमनं च [2]मूर्तौ ।।८१।।
लाभारिविक्रमगता धनकीर्तिदाः खलाः
सौम्यास्त्रिकोणधनविक्रमकेन्द्रलाभगाः ।
सौख्यार्थलाभजनसख्यसदन्नमानदाः
षष्ठे शुभः शुभकरोऽन्यमतेन मध्यः ।।८२।।

श्रीपतिः–

ततो नृपो विप्रसुहृत्पुरोधसः
शिल्पज्ञभूगोलविदश्च भागिनः ।
धनैश्च रत्नैः पशुभिः समर्चयेत्
सदान्धदीनान् पुरवासिनस्तथा ।।८३।।

कश्यपः–

एवं यः प्रविशेद्राजा योगे दैवज्ञकीर्तिते।
काले शास्त्रोक्तविधिना शरीरं सुखमश्नुते ।।८४।।

नारदश्च पुनः–

अकपाटमनाच्छन्नमदत्तं बलिभोजनम्।
गृहं न प्रविशेद्देवं विपदामाकरं हि तत् ।।८५।।

प्रसङ्गत उपरितन-श्लोका लोकोपयोगित्वादुद्धृता स्पष्टाश्चेति रामः ।।७५-८५।।

।। इति गृहप्रवेशविवेचनं नाम पञ्चविंशतितमं सोपानम् ।।



---

१. द्विपदेषु त्रिषडायरहितेषु इति ज्ञेयम् । (३।६।११ इति)
२. द्वितीये इति पाठः साधुः ।

## अथ विधिविहितविरुद्धगृहनिर्माणोत्पन्नदोषसङ्ग्रहं नाम षड्विंशतितमं सोपानम्

सूत्रधारः–

**अथेदानीं गृहादीनामप्रशस्तसमुच्छ्रितम्।**
**क्रियते कथितं यस्मादेकत्र सुसमं भवेत्।।१।।**

दोषास्तावद्भूप्लवस्य–

**रक्षोऽम्बुनाथकीनाश–मरुद्दहनदिक्प्लवा।**
**मध्यप्लवा च भूर्व्याधिदारिद्र्यमरकावहा।।२।।**

दिक्प्लवफलम्–

**वह्निप्लवा वह्निभये मृतये दक्षिणप्लवा।**
**रुजेरक्षप्लवा प्रत्यक्प्लवा धान्यविनाशिनी।।३।।**
**कलहाय प्रवासाय रोगाय च मरुत्प्लवा।**
**मध्यप्लवा तु या भूमिः सर्वनाशकरी भवेत्।।४।।**

यद्यपि यथा प्रकरण दोषों का वर्णन किया गया है, तथापि सुविधा के लिए कथित पूर्व दोषों का यहाँ एकत्र संग्रह किया जा रहा है। अग्निकोण-दक्षिण-नैऋत्यकोण-पश्चिम-वायव्य व मध्य की प्लवा भूमि व्याधि-दारिद्र्य व मृत्युकारिणी होती है। अब प्रत्येक दिशा की प्लवा (नीच) भूमि का पृथक्-पृथक् फल प्रकाशित किया जा रहा है।

अग्निकोण की प्लवा निम्न भूमि अग्निभय, दक्षिणप्लवा मृत्यु, नैऋत्यप्लवा रोग, पश्चिमप्लवा धन-धान्य-विनाशिनी, वायव्यप्लवा भूमि कलह-रोग-प्रवास व मध्यप्लवा भूमि सर्वस्वनाशक होती है ॥१-४॥

दोषान्तरम्–

**तुषास्थि–केश–कीट–त्वक्–शंखभस्मोषरान्विताम्।**
**खर्पराङ्गारिणीं चैव दुष्टसत्त्वान्वितां त्यजेत्।।५।।**

भूसी-हड्डी-केश-(बाल) कीट-चर्म-शंख-भस्म-ऊषर-खर्परा-(कङ्कण) पत्थर-ईंट-मृत्पात्र-खण्ड-कोयला-दग्धकाष्ठ और दुष्ट जीवों (सर्पादि-हिंसक जीव) के निवास की भूमि का सर्वथा त्याग करना चाहिए ॥५॥

**चैत्रे शोककरं वेश्म ज्येष्ठे मृत्युप्रदायकम्।**
**पशुनाशनमाषाढे शून्यं भाद्रपदे कृतम्।।६।।**

**आश्विने कलहाय स्यात् कार्तिके भृत्यनाशिनी।**
**माघे चाग्निभयं विद्याच्छेषमासेषु वै शुभम्।।७।।**

स्पष्टार्थ है, किन्तु ये चान्द्रमास के अनुसार फल कहा गया है। रवि-संक्रान्तिपरक मासोक्त फल के अनुसार तुलनात्मक दोनों प्रकार की शुद्धि ही निर्माण में प्रशस्त है ॥६-७॥

अन्यो देवस्थानपरकदोषः—

**पावकस्य पदे पृष्ठवंशस्यापि च पश्चिमे।**
**पुरप्रासादकर्णे च कीलादि प्राक् प्रयोजयेत्।।८।।**

अग्निदेव-स्थान (कोण) पृष्ठ वंश के पश्चिम ग्राम-पुर व प्रासाद के कोण व पूर्वभाग (दिशा) में कील या स्तम्भों का निवेश शुभ होता है ॥८॥

दिङ्मूढदोषः—

**पूर्वपश्चिमदिङ्मूढं वास्तु स्त्रीनाशकृद् भवेत्।**
**उदङ्मूढे न निष्पत्तिं याति सर्वं च नाशयेत्।।९।।**

पूर्व या पश्चिम की दिशा में भवन के दिङ्मूढ होने पर स्त्रीनाश, उत्तरदिङ्मूढ़ निर्मित गृह अवरुद्ध होकर सर्वनाशक हो जाता है ॥९॥

**यत्तु दक्षिणदिङ्मूढं जायते मरणाय तत्।**
**प्राग्वास्तुनि च कुर्वीत प्रासादं मन्दिरं पुरे।।१०।।**
**वलितं चलितं भ्रान्तं विसूत्रं च समुत्सृजेत्।**
**यत्स्यान्मुखविनिष्क्रान्तं वलितं तत्प्रचक्षते।।११।।**
**चलितं पृष्ठनिष्क्रान्तं दिङ्मूढं भ्रान्तमुच्यते।**
**विसूत्रं कर्णहीनं स्यात् फलमेषां प्रचक्ष्महे।।१२।।**

दक्षिण दिशा का मूढ़ (टेढ़ा सदन) मृत्युकारक तथा पुर प्रासाद या मन्दिर का निर्माण दिङ्मूढरहित होना चाहिए। वलित-चलित-भ्रान्त-विसूत्री-कृत सदन का सर्वदा त्याग करना ही श्रेयस्कर होता है। जो वास्तु (सदन) मुख विनिष्क्रान्त अर्थात् जिसका अग्रभाग (मुख्यद्वार का भाग) बहिर्मुख होता है, वह वलित, पीछे निष्क्रान्त (निकला हुआ) चलित तथा दिङ्मूढ़ वास्तु भ्रान्त, कर्णहीन, अन्तर्मुख हो तो विसूत्र नाम से व्यवहृत है। इनके फल का निर्देश अग्रिम सूत्र में किया जायेगा ॥१०-१२॥

एतेषां फलम्—

**वलिते चलितं स्थानं चलिते विग्रहो भवेत्।**
**भ्रान्ते योषिद्विनाशाय विसूत्रं भूरिशत्रुकृत्।।१३।।**

उपर्युक्त लक्षणों का फल– वलित सदन उच्चाटन, चलित विग्रह-भ्रान्त स्त्रीविनाश, विसूत्र भूरिशत्रुबाधाकारक होता है। अत: इन दोषों का सर्वथा त्याग आवश्यक है ॥१३॥

**मूषकोत्कर–वल्मीक–प्रान्तवक्रा भुजङ्गमा।**
**च्छिन्ना भिन्ना विकर्णा च न वास्तुनि शुभा क्षितिः ।।१४।।**

मूषक-विवरवती-वल्मीकयुक्ता-वक्रा-भुजङ्गाकृति-छिन्न (टेढ़ा-मेढ़ा समचतुरस्रहीना) भिन्ना-फटी (दरारयुक्ता) विकर्ण कोणों से हीन, जो चार कोणों से हीन हो, ऐसी भूमि सर्वथा त्याज्य है ॥१४॥

एषां भूमिफलम्–

**मूषकोत्करवत्यर्थं हन्ति वल्मीकिनी सुतम्।**
**विकर्णा कुरुते कर्णरोगं च्छिन्ना विनाशिनी।।**
**भिन्ना भेदमकरोत्युर्वी कुटिला मतिवक्रगा।।१५।।**

मूषकविवरवती ऊषरा अर्थहानि, वल्मीकयुता पुत्रहानि, विकर्णा कर्णरोग, छिन्नभूमि विनाश, भिन्न भू भेदोत्पादिनी व कुटिला (भुजङ्गाकृति) मतिविभ्रम उत्पन्न करती है ॥१५॥

आकृतिविशेषफलम्–

**सपादं सत्रिभागं वा सार्धद्विगुणमेव वा।**
**यत्स्यान्मुखायतं वेश्म तदनिष्टफलप्रदम्।।१६।।**

चौड़ाई से लम्बाई का मान सपाद या त्रिपाद, सार्धपाद या द्विगुणित अधिक होने पर अशुभ फलदायी है ॥१६॥

विशेष:–

**पुरतः पृष्ठतः पार्श्वे यदि वाऽलिन्दवर्जितम्।**
**गृहे न शस्यते शाला देवागारे तु शस्यते।।१७।।**

अलिन्दविहीन शाला शुभ नहीं है; किन्तु देवगृह विना शाला भी शुभ होता है ॥१७॥

अन्यच्च–

**अन्यपृष्ठस्थितं द्वारं वेश्म खादकमुच्यते।**
**परस्परं विरोधाय तद्वेश्म गृहिणोस्तयोः ।।१८।।**

किसी सदन के पीछे दूसरे सदन का द्वार हो तो उसे खादक कहते हैं, यह दोनों गृही के लिए परस्पर विरोध उत्पन्न करता है ॥१८॥

भवन-चतुष्टय-मर्मदोषः—

**सशल्यं पादहीनं च समसन्धिशिरोगुरु।**
**वेश्मनामिदमुद्दिष्टं मर्मदोषचतुष्टयम्।।१९।।**

सशल्य-पादहीन-समसन्धि व शिरोगुरु ये चार मर्मदोष वास्तु पुरुष के जिस अंग में हों, वही स्वामी का भी अङ्ग विद्ध हो जाता है ॥१९॥

**छिन्नाङ्गं विकलं तत्स्याद् भीतिदं सर्वदोषकृत्।**
**तद्भर्तुर्भज्यते चाङ्गं तद्वेधः स्यात् फलमन्यथा।।२०।।**

छिन्नाङ्ग भवन विकल नाम से प्रसिद्ध है, ऐसा सदन सर्वदोषों का आकर और भयदायक है। वास्तु पुरुष का जो अङ्ग विकल होता है, वही अंग गृही का भी विकल होता है ॥२०॥

**स्वगृहद्वयमध्येन निर्वाहो यदि वर्त्मनः।**
**द्वारवेधोदितान् दोषांस्तत्र प्राप्नोति निश्चितम्।।२१।।**

दो भवनों के बीच से जो मार्ग निकलता हो, उसमें द्वारवेधोक्त समस्त दोष होते हैं ॥२१॥

अपि च—

**मार्गश्चैको यदा गच्छेदुभयोर्गृहपार्श्वयोः।**
**मार्गवेधस्तदा स स्याच्छोकसन्तापकारकः।।२२।।**

दो गृहों के बगल से मार्ग (रास्ता) निकलता हो, तो वे दोनों गृह मार्गविद्ध होंगे और वह शोक व सन्तापकारक होते हैं ॥२२॥

प्रवेशास्तु चत्वारः—

**उत्सङ्गः पूर्णबाहुश्च हीनबाहुस्तथापरः।**
**प्रत्यक्षाय इति प्रोक्तं प्रवेशानां चतुष्टयम्।।२३।।**

उत्सङ्ग-पूर्णबाहु-हीनबाहु व प्रत्यक्षाय ये चार प्रवेश होते हैं ॥२३॥

एतल्लक्षणम्—

**गृहस्य सम्मुखं यत्र द्वारं भवति वास्तुनः।**
**उत्सङ्ग इति स प्रोक्तः पूर्णबाहुः प्रदक्षिणः।।२४।।**
**वामतो हीनबाहुः स्यात् प्रत्यक्षो वास्तुपृष्ठतः।**
**चतुर्थोऽयं समुद्दिष्टः प्रवेशो वास्तुनो बुधैः।।२५।।**

वास्तु के सम्मुख द्वार उत्सङ्ग, दक्षिण पूर्णबाहु, वामभाग में हीनबाहु व पीछे के द्वार को प्रत्यक्षाय ये चार प्रवेश के लक्षण होते हैं ॥२४-२५॥

एतेषां फलम्–

**उत्सङ्गाख्ये प्रवेशे तु प्रजाहानिः कुटुम्बिनः।**
**धनधान्यक्षयो वास्य मरणं वा ध्रुवो भवेत्।।२६।।**
**पूर्णबाहुः पुत्रपौत्र–धन–धान्य–सुखानि च।**
**भवन्ति वसतो नित्यं गृहिणस्तत्र वास्तुनि।।२७।।**
**अल्पवित्तो गृही हीनबाहावत्यल्पबान्धवः।**
**स्याद्वाल्पवित्तो जीयेत तथा पीड्येत वामयैः।।२८।।**
**प्रत्यक्षायप्रवेशस्तु विहितो यत्र वेश्मनि।**
**तस्मिन् निवसतां पुंसां निश्चितः स्याद् धनक्षयः।।२९।।**

उत्सङ्ग नामक वास्तु प्रवेश में गृही के प्रजा की हानि, धन-धान्य का क्षय व मृत्यु निश्चित है। पूर्णबाहु वास्तु में बसने वाले स्वामी को धनधान्य पुत्र-पौत्र की वृद्धि व सुख की प्राप्ति होती है। हीनबाहु में मित्र-बान्धव व धनधान्यों की मात्रा थोड़ी होती है,येन केन प्रकारेण निर्वाह होता रहता है, और रोगपीड़ा भी रहती है। प्रत्यक्षाय में निवास धनधान्य-विनाशक है ॥२६-२९॥

**विशेष–** *यह सम्मुखादि भाग शेषनागरूप वास्तुपुरुष के निवास (आरम्भ के समय) की दिशा सम्मुख, वाम की वाम, दक्षिण की दक्षिण व पृष्ठ की दिशा पृष्ठ होगी, यही सम्भव प्रतीत होता है। अथवा गृह का मध्यभाग व सम्मुख पूर्णाङ्ग सम्पन्न वास्तु पूर्ण व किसी अंग का हीन हीनबाहु व पृष्ठ से हीन पृष्ठ यही प्रत्यक्षाय हो सकता है।*

यथोक्तस्थानभिन्नमूषाफलम्–

**मूषा स्वस्थानयुक्तासु शालाभेद इति स्मृतः।**
**प्राप्नोति तत्र निवसन् मृत्युं दुःखं सरोगताम्।।३०।।**

यथाविहित स्थान से भिन्न स्थान की मूषा शालाभेद उत्पन्न करती है और शालाभेद के निवास से रोग-मृत्यु व दुःख होता है ॥३०॥

शालोद्देशेन द्वारफलम्–

**उदग्दक्षिणशालासु पूर्वापरगतासु च।**
**अन्यथा वा कृतं द्वारं वधबन्धनकारकम्।।३१।।**

वास्तु भूमि में उत्तर व दक्षिण शाला का भवन (गृह) तथा पूर्व-पश्चिम शाला भवन में द्वार करने से वध व बन्धन का भय होता है; क्योंकि उत्तर-

दक्षिण शाला में उत्तर व दक्षिण द्वार करने से क्रूर व पूर्व-पश्चिम द्वार से खर नाम का गृह होता है ।।३१।।

**मूषागतान् भ्रमान् कुर्यान्न शालां प्रतिभेदयेत्।**
**भ्रमभग्नासु शालासु विपद्यन्ते कुटुम्बिनः ।।३२।।**

मूषाओं के भ्रम से शाला का भेद होता है, वह भेद कथमपि नहीं करना चाहिए, अन्यथा कुटुम्बी विपत्ति का ग्रास होता है ।।३२।।

शालाभेदवैशिष्ट्यम्–

**शालाभेदो भवेद्यत्र पृष्ठतः पार्श्वतोऽपि वा।**
**धनधान्यक्षयस्तत्र गृहिणो जायते ध्रुवम् ।।३३।।**

पीछे व पार्श्व (बगल) से शाला (छिन्नभिन्न) भेद होने पर कुटुम्बी धन-हीन हो जाता है ।।३३।।

दिग्वशेन शालाभेदफलम्–

**यत्र प्रत्यङ्मुखे शाले गृहं स्यात् तद्विकोकिलम्।**
**आयुश्चतुष्पदं धान्यं वसतां तत्र नश्यति ।।३४।।**

जहाँ पश्चिममुख दो शालायें हों, उसे विकोकिल कहते हैं, वह आयु-पशु व धान्य का नाशक है; क्योंकि उसे दुर्मुख कहते हैं ।।३४।।

**स्थापितद्वारसंरोधे गृहिणो जायतेऽश्मरी।**
**द्वारे तु विहिते तस्मिन्नर्थस्तत्र जायते ।।३५।।**

स्थापित द्वार के संरोध होने पर अपस्मार, भय अथवा अवरोधकारक स्थानसम्मुख द्वार करने पर अनर्थ होता है ।।३५।।

**कृतानि यत्र क्षीयन्ते गवाक्षाऽऽलोकनानि च।**
**तत्र प्रसूतिर्न भवेन्निष्पन्नापि विनश्यति ।।३६।।**

जिस घर में जँगला अथवा रोशनदान भंग हो जाय, तो उस गृह में प्रसव नहीं होता है, यदि हो तो भी नष्ट हो जायेगा ।।३६।।

चयनदोषः–

**चीयमाना यदा भित्तिर्दक्षिणे स्याद्बहिर्मुखी।**
**तदा व्याधिभयं विद्यान्नृपदण्डभयं तथा ।।३७।।**

चीयमान निर्मित भित्ति यदि दक्षिण दिशा की ओर निकल जाय (दक्षिण बढ़ जाय), तो उस घर में व्याधि व राजदण्ड का भय होता है ।।३७।।

**यदा तु पश्चिमं कुड्यं प्रयाति बहिरग्रतः।**
**धनहानिर्विजानीयाच्चौरेभ्यश्च भयं भवेत्।।३८।।**

चयनित भित्ति पश्चिम दिशा में बहिर्मुख हो, तो धनहानि व चोरभय होता है ॥३८॥

**उत्तरन्तु यदा कुड्यं चीयमानं बहिर्भवेत्।**
**गृहभर्तुश्च कर्तुश्च व्यसनं स्यात्तदा महत्।।३९।।**

उत्तर की दिशा में बहिर्मुख भित्ति से परिवार महती विपत्ति व्यसन की अनुभूति करेगा ॥३९॥

**यदाग्रं चीयमानायाः पूर्वभित्तेर्बहिर्भवेत्।**
**तदा तु गृह्यते तीव्रं राजदण्डभयं भवेत्।।४०।।**

पूर्वाभिमुख बहिर्गत भित्ति से भयंकर राजदण्ड होता है ॥४०॥

**चीयमानो यदा कर्णोऽग्निकोणे बहिर्गतः।**
**तत्राग्निभीतिरतुला संशयश्च प्रभोर्भवेत्।।४१।।**

चयनित कोण (दक्षिण-पूर्व) अग्निकोण में बढ़ जाय, तो घोर अग्निबाधा व गृहस्वामी सर्वदा संशयग्रस्त रहता है ॥४१॥

**बहिर्मुखो यदा गच्छेत्कर्णो दक्षिणपश्चिमः।**
**कलहोपद्रवस्तत्र स्याद्भार्यायाश्चेति संशयः।।४२।।**

नैर्ऋत्यकोण में बढ़े कोण से गृहिणी संशयग्रस्त रहती है या सन्देह का विषय बन जाती है और पारिवारिक कलह व उपद्रव की शृंखला बनी रहती है ॥४२॥

**यत्रोत्तरपरः कर्णश्चीयमानो बहिर्भवेत्।**
**पुत्रवाहनभृत्यानां भवेत् तस्मिन्नुपद्रवः।।४३।।**

वायव्यकोण का बहिर्मुखकोण पुत्र, वाहन व भृत्यों में उपद्रव, परस्पर कलह, अशान्तिकारक होता है ॥४३॥

**यदा प्रागुत्तरः कर्णो बहिर्गच्छति वेश्मनः।**
**तदा गवां वृषाणां च गुरूणां च क्षयो भवेत्।।४४।।**

ईशानकोण में बहिर्गत कर्ण से गाय-बैल व गुरुजनों की हानि होती है ॥४४॥

**चतस्रो भित्तयो यस्य बहिर्निर्यान्ति वेश्मनः।**
**चीयमानास्तदत्रोक्तं मन्दिरं मल्लिकाकृतिः।।४५।।**

**तादृग्गृहे[१] न तत्रायो व्ययो भवति यादृशः ।**
**कर्शितोऽस्यैव दोषेण तस्य भर्ता पलायते।।४६।।**

यदि चारों भित्ति बहिर्मुख हो जाय, तो उस गृह का नाम मल्लिका होता है। उसमें गृहस्वागी दुःखपरम्परा से व्यथित होकर गृह से भाग जाता है। अर्थात् आय व व्यय के असंतुलित हो जाने से गृहस्वामी व्यग्र होकर घर छोड़ देता है ॥४५-४६॥

**संक्षिप्यते तु यद्वेश्म चीयमानं समन्ततः ।**
**संक्षिप्तमिति तज्ज्ञेयं तत्र राजभयं भवेत्।।४७।।**

चीयमान भित्ति चारों दिशा में सिकुड़ जाय, अन्तर्मुखी हो जाय, तो उसे संक्षिप्त कहते हैं और वह राजभय देता है ॥४७॥

**यत्स्यादन्तेषु संक्षिप्तं विस्तृतं चापि मध्यतः ।**
**मृदङ्गाकृतिसंस्थानं तत्र व्याधिभयं भवेत्।।४८।।**

जो चारों कोणों में सङ्कुचित हो जाय व मध्य में बहिर्मुख हो, तो उसे मृदङ्गाकृति वेशम कहते हैं, उसमें व्याधि का भय निश्चित है ॥४८॥

**आद्यन्तविस्तृतं यत्स्यात्संक्षिप्तं चापि मध्यतः ।**
**मृदुमध्यं तदुद्दिष्टं क्षुद्भयं तत्र जायते।।४९।।**

आदि और अन्त के विस्तार और मध्यभाग के संकोच गृह को दुर्बलमध्य कहते हैं, उसमें क्षुद्भय, तृप्ति का अभाव होता है ॥४९॥

**विषमैरुन्नतैः कर्णैर्धनक्षयकरं गृहम्।**
**भित्तिवच्चापि कर्णेषु प्रागुक्तं फलमादिशेत्।।५०।।**

विषम परस्पर असमान कर्ण (कोणवाला) गृह धनहानिकारक होता है, और भित्ति की भाँति कर्णों (कोण) का भी फल होता है, अर्थात् दोषयुक्त कर्णों में भी नाना प्रकार के दुःख, व्याधि का भय बना रहता है ॥५०॥

द्वारदोषः—

**मध्ये द्वारं न कर्तव्यं मनुजानां कथञ्चन।**
**मध्ये द्वारे कृते तत्र कुलनाशः प्रजायते।।५१।।**
**द्वारं द्वारेण वा विद्धमशुभायोपपद्यते।**
**अनिष्टद्रव्यसंयुक्तं धनधान्यविनाशनम्।।५२।।**

---

१. तादृगायो न तत्रास्ति इति भवितव्यम् ।

**नवं पुराणं संयुक्तमन्यं स्वामिनमिच्छति।**
**अधोग्रं राजदण्डाय विद्धं द्वारं विगर्हितम्।।५३।।**

भवन के दीर्घ या विस्तार के मध्य का मुख्यद्वार कुलनाशकारी और द्वार से विद्ध द्वार अशुभकारक, अनिष्ट सामाजिक एवं शास्त्रीय दृष्टि से अपवित्र घृणित पदार्थ से मिश्रित मिले-जुले पदार्थों से निर्मित द्वार धन-धान्य का नाशक होता है। नीचे के भाग में उग्र उन्नत, अन्य भागों में ह्रास द्वार में राजदण्ड और विद्ध द्वार सर्वथा निन्दित है। नूतन पदार्थ व प्राचीन व्यवहृत पदार्थों के मिश्रण से निर्मित द्वार या भित्ति प्रभृति भवन का कोई भी भाग अन्य स्वामी की कामना करते हैं, अर्थात् नूतन पुराना मिश्रित द्रव्य का गृहनिर्माण में सर्वथा त्याग उचित है, अन्यथा वह गृह परहस्तगत हो जाता है ।।५१-५३।।

अन्यदपि–

**नवं पुराणं संयुक्तं द्रव्यन्तु कलिकारकम्।**
**न मिश्रजातिद्रव्योत्थं द्वारं वा वेश्म वा शुभम्।।५४।।**

व्यवहृत नूतन मिश्रित द्रव्य से निर्मित द्वार या गृह अशुभ व कलिकारक होता है ।।५४।।

**गृहस्थानेषु यद् द्रव्यमधिवास्य प्रतिष्ठितम्।**
**तच्चालनेन चलनं गृहभर्तुः प्रजायते।।५५।।**

गृह में किसी भी वस्तु को कहीं पर स्थापित करने के बाद पुनः उसे वहाँ से उठाने या चलाने पर गृहस्वामी का भी चलन होता रहता है, अर्थात् गृहपति स्थिर नहीं होता है ।।५५।।

**अन्यवास्तुच्युतं द्रव्यमन्यवास्तौ न योजयेत्।**
**प्रासादे न भवेत्पूजा गृहे न च वसेद्गृही।।५६।।**

अन्य वास्तु में प्रयुक्त पदार्थ उससे भिन्न वास्तु में प्रयुक्त होने पर प्रासाद में पूजा (प्रतिष्ठा) का अभाव और गृह में गृही का उद्वास होता है ।।५६।।

**द्रव्येण देवदग्धेन भवनं यद्विधीयते।**
**न तत्र वसति स्वामी वसन्नपि विनश्यति।।५७।।**

देवदग्ध द्रव्य (देवावास देवगृह में प्रयुक्त द्रव्य देवदग्ध होता है) से निर्मित गृह गृहस्वामी का उद्वसन अथवा बसने पर विनाश होता है ।।५७।।

**सूर्योद्भवा द्रुमच्छाया ध्वजच्छाया च गर्हिता।**
**द्वारातिक्रमणादेषा क्षुद्व्याधिकलिकारका।।५८।।**

सूर्य से उत्पन्न वृक्ष व ध्वज की छाया गृहोपरि निषिद्ध है। यदि ये छाया मुख्यद्वार का अतिक्रमण (प्रविष्ट) करती है, तो क्षुधा व्याधि रोग व कलिकारक होती है ॥५८॥

ध्वजच्छाया–

**प्रासादशिखरच्छाया ध्वजच्छायेति [1]कथ्यते।**
**त्रिपञ्च–सप्तमी भर्तुर्गृहतारा न शस्यते॥५९॥**

प्रासाद के शिखर की छाया ध्वजछाया कही जाती है। स्वामी के नाम नक्षत्र से ३।५।७ वीं तारा गृहनिर्माण में मंगलकारी नहीं होती है ॥५९॥

**निम्नोन्नतं करालं च सम्मुखं पृष्ठदेशगम्।**
**वामावर्तं च न शुभं द्वारमग्रतरं गृहम्॥६०॥**

निम्न-उन्नत-कराल-सम्मुख-पृष्ठस्थ-वामावर्त व अग्रतर द्वार वाला गृह शुभ नहीं है। इनमें से कोई भी दोष नहीं होना चाहिए ॥६०॥

एतेषामुद्धरणम्–

**निम्ने स्यात्स्त्रीजितो भर्ता दुर्जनस्थितिरुन्नते।**
**सम्मुखे सुतपीडा स्यात् पृष्ठगे चपलाः स्त्रियः॥६१॥**
**वामे वित्तक्षयो द्वारे भवत्यग्रतरे प्रभोः।**
**द्वारं तस्मान्न कर्तव्यमीदृग्रूपं विचक्षणैः॥६२॥**

निम्नोन्नतादिकस्य फलम्–

द्वार के निम्न (नीच) होने पर स्वामी स्त्रीजित होता है, अर्थात् स्त्री की प्रभुता रहती है। उन्नति में दुर्जनों जैसा गृह में परस्पर कलह-विवाद होता रहता है। सम्मुखस्थ (मध्यस्थ) द्वार में पुत्रपीडा, पृष्ठस्थ में स्त्रियों की चंचलता, वामावर्त में धनहानि, अग्रमुख द्वार में विनाश व अशुभ है ॥६१-६२॥

**नागदन्त–तुला–स्तम्भ–भित्ति–मूषा–गवाक्षकाः।**
**द्वारमध्ये न दातव्या न चैते विषमस्थिताः॥६३॥**

नागदन्त (खूँटी) द्वार शाखोपरि स्थित काष्ठ की सीमा जोड़-तुला-स्तम्भ-भित्ति-मूषा-गवाक्ष द्वार के मध्यभाग में नहीं देना चाहिए और इनकी संख्या विषम भी नहीं होनी चाहिए, अथवा इन्हें विषम स्थान में भी नहीं लगाना चाहिए ॥६३॥

गृहोपरि चित्रणविषये–

**इतिहासपुराणोक्तं वृत्तान्तं प्रतिरूपकम्।**
**निन्दितं च गृहे नेष्टं शस्तं देवकुलेषु तत्॥६४॥**

---

१. कीर्तिता इति पाठोऽपि भवितव्यः।

इतिहासप्रतिपादित व पुराणोक्त आख्यायिका या उसका चित्रण गृह-भूषा में निन्दित है; किन्तु देवगृह में शुभ है ॥६४॥

**यानीन्द्रजालतुल्यानि यानि मिथ्याकृतानि च।**
**भीषणानि च यानि स्युर्न कुर्यात्तानि वेश्मसु॥६५॥**

इन्द्रजाल के समान चित्र व मिथ्या रचित चित्र, रौद्र व भीषण चित्रों का चित्रण गृह में निषिद्ध है ॥६५॥

द्वारदोषा अत्र संगृहीताः—

**स्वयमुद्घटितं द्वारमुच्चाटनकरं भवेत्।**
**धनहृद्बन्धुवैरं स्यादथवा कलिकारकम्॥६६॥**

अपने आप खुलने वाला कपाट उच्चाटन,धनहानि,बन्धुवैर व कलह-कारक होता है ॥६६॥

**स्वयं यत्पिहितं द्वारं तद्भवेद्बहुदुःखदम्।**
**सशब्दं भयकृत् पादशीतलं गर्भपातनम्॥६७॥**

अपने आप बन्द होने वाला कपाट (द्वार) बहुदुःखदायी व शब्दायमान कपाट (खुलते समय या बन्द होते समय शब्द करने वाला) भयकारक, पादशीतल व गर्भपातकारक होता है ॥६७॥

अन्यच्च—

**द्रव्यं नाधोमुखं कार्यं प्रत्यग्याम्याननं च यत्।**
**पश्चिमाग्रे परिक्लेशो दक्षिणाग्रे तु शून्यता॥६८॥**

कपाट में प्रयुक्त द्रव्य, अधोमुख व पश्चिम-दक्षिणमुख नहीं करना चाहिए, क्योंकि ऐसा क्लेश व शून्यताकारक होता है ॥६८॥

विशेषः—

**शाला निम्ना भवेद्यस्मिन्नलिन्दस्त्वधिको भवेत्।**
**निधनं जायते तत्र सदा शोकभयानि च॥६९॥**

शाला (कमरा) के स्तर से अलिन्द के स्तर की ऊँचाई अधिक नहीं होनी चाहिए; अन्यथा सदा शोक व भय बना रहेगा ॥६९॥

अन्यद्वारदोषाः—

**क्षुद्भयप्रदमाध्मातं कुब्जं कुलविनाशनम्।**
**अत्यर्थं पीडितं पीडां करोत्यन्तनतं क्षयम्॥७०॥**

अध्मात द्वार क्षुद्भय, कुब्ज कुलनाशक, अतिपीड़ित व द्वारपीड़ित भीतर को नत क्षयकारक होता है ॥७०॥

**प्रवासो बाह्यविनते दिग्भ्रान्ते दस्युतो भयम्।**
**मूलद्वारं क्षयं कुर्याद्विद्धं द्वारान्तरेण यत्।।७१।।**

बाहर की तरफ निकला हुआ कपाट प्रवास, दिङ्मूढ़ (समायतविरुद्ध) कपाट व द्वार दस्युभय उत्पन्न करता है। मुख्यद्वार प्रमाणहीन हो या किसी अन्य द्वार से विद्ध हो, तो अग्रिमश्लोकानुसार अनिष्ट फल होता है ।।७१।।

फलं च–

**प्रवासो भृत्यजो द्वेषो विद्धे चत्वररथ्यया।**
**नाशं द्रव्यं ध्वजाविद्धं वृक्षेण शिशुदूषणम्।।७२।।**

आमने-सामने द्वारवेध से प्रवास व भृत्यदोष होता है। रथ या चत्वरविद्ध द्वार विनाश, ध्वजविद्ध द्रव्यहानि, वृक्षविद्ध द्वार पुत्रदोषोत्पादक होता है ।।७२।।

**पङ्कविद्धे भवेच्छोकः सलिलस्राविणि व्ययः।**
**कूपविद्धे त्वपस्मारो विनाशो दैवतेन च।।७३।।**

कीचड़विद्ध से शोक, सलिलविद्ध से व्यय, कूपविद्ध से अपस्मार, देवविद्ध से सर्वनाश होता है ।।७३।।

**स्तम्भेन दूषणं स्त्रीणां ब्रह्मणा तु कुलक्षयः।**
**मानेऽभ्यधिके द्वारे राजतो जायते भयम्।।७४।।**

स्तम्भविद्ध द्वार से स्त्री दूषित, ब्रह्मविद्ध द्वार से कुलनाश, प्रमाण से अधिक होने पर राजभीति होती है ।।७४।।

**व्यसनं मानतो हीने चौरेभ्यश्च भयं भवेत्।**
**व्याधयः श्वभ्रविद्धेन धनस्य च परिक्षयः।।७५।।**

प्रमाणहीन द्वार से व्यसन व चोरभय, श्वभ्रविद्ध से व्याधिभय व धन की भी हानि होती है ।।७५।।

**देवध्वजेन बन्धः स्यात् सभयैश्वर्यसंक्षयः।**
**सन्निपातभयं वाप्या [1]कुल्या दृष्टत्वमाकृतेः।।७६।।**

देवध्वज वेध से बन्धन व ऐश्वर्य का नाश तथा भय बना रहे, वापी-वेध से सन्निपात, रोगभय और लघुजलाशय से दृष्टिदोष उत्पन्न होता है ।।७६।।

**हृद्रुक्कुलालचक्रेण दारिद्र्यं वारिणा भवेत्।**
**व्याधिरुक् कचकूटेन अपाकेन कुलक्षयः।।७७।।**

कुलाल चक्र के वेध से हृदयरोग, जलप्रवाह से दारिद्र्य, बाल-समूह (कच) के वेध से व्याधिभय, कूड़ा-कतवार अपवित्र वस्तु के वेध से कुलक्षय होता है ।।७७।।

---

१. कुल्या = लघुजलाशय इति ।

**निश्चोलूखलेन स्याच्छिलया स्मरीभयम्।**
**तोयभाण्डेन दुर्मन्त्री भस्मना चार्शतो गृही।।७८।।**

उलूखल (ओखर) के वेध से निर्धनता, जाँता-सिल के वेध से स्मरीभय, जलभाण्ड वेध से दुर्मन्त्री (बुद्धिदोष), भस्मसमूह से विद्ध द्वार अर्शदोष उत्पन्न करता है ॥७८॥

**दारिद्र्यं च्छायया विद्धे भवेद् द्वारे कुटुम्बिनः।**
**स्थल–स्यन्दन–वल्मीकैर्विदेशगमनं भवेत्।।७९।।**

छायावेध से सकुटुम्ब दरिद्र होता है, ऊँची भू बेमुअटि समूह के वेध से विदेश का गमन होता है ॥७९॥

**कृशं विकृतमत्युच्चं करालं शिथिलं पृथु।**
**वक्रं विशालं उत्तानं स्थूलाग्रं ह्रस्वकुक्षिकम्।।८०।।**
**स्वपादचलितं ह्रस्वं हीनकर्णं मुखानतम्।**
**पार्श्वगं सूत्रमार्गाच्च भ्रष्टद्वारं न शोभनम्।।८१।।**
**तत्करोति क्षयं घोरं विनाशं स्वामिसम्पदः।**
**वसतां कलहं नित्यमतस्तत्परिवर्जयेत्।।८२।।**

कृश-विकृत-अत्युन्नत-कराल-शिथिल-पृथु-वक्र-विशाल-उत्तान-स्थूलाग्र-ह्रस्वकुक्षि-स्वपादचलित-ह्रस्व-हीनकर्ण-मुखानत-पार्श्वनत-सूत्रमार्ग से भ्रष्ट द्वार शुभ नहीं होता है,इसमें गृहलक्ष्मी का घोर विनाश व नित्य कलह होता रहता है। अतः इस प्रकार के दोषयुक्त द्वार का निर्माण न किया जाय ॥८०-८२॥

**अन्तर्द्वाराद्बहिर्द्वारं नोच्चं कुर्यान्न सङ्कटम्।**
**उच्चं विसङ्कटं वापि तच्छ्रियो नैव जायते।।८३।।**

भीतर के द्वार से बाहर का द्वार ऊँचा व सकरा नहीं करना चाहिए, क्योंकि ऊँचा द्वार (भीतर द्वार की अपेक्षा) और सकरा (सङ्कुचित) द्वार कल्याणकारी नहीं होता है ॥८३॥

**पट्टसन्धिर्यदा मध्ये द्वारस्य स्यात्कथञ्चन।**
**कर्तुस्तदा विनाशः स्यात् कुलस्य च परिक्षयः।।८४।।**

द्वार के मध्य में पट्टसन्धि होने पर कर्ता व कुल का विनाश होता है। कर्ता से स्थपति व गृही दोनों लेना उचित है, अतः इसका सर्वथा त्याग ही उचित है ॥८४॥

**तुला उपतुला वा स्युर्द्वारि तिर्यग्यदा भवेत्।**
**दारिद्र्य–व्याधि–सन्तापा भवन्ति स्वामिनस्तदा।।८५।।**

द्वार के ऊपर लगी हुई या दी जाने वाली तुला या उपतुला किसी प्रकार टेढी (वक्र) हो जाय या वक्र लगायी जाय, तो स्वामी व्याधि-दरिद्रता व सन्ताप से दुःखित रहता है ॥८५॥

**उदुम्बरे विनिहिता ललाटी नाम सा तुला।**
**दूषणं मरणं वापि कन्यानां विदधाति सा॥८६॥**

उदुम्बर (द्वार के ऊपर के बाजू का काष्ठ) में यदि तुला को जोड़ दिया जाय, तो उसका ललाटी नाम होता है और उससे कन्याओं का दूषण व नाश होता है ॥८६॥

**उत्तराङ्गोदरे न्यस्ता ललाटेन समा यदि।**
**तुला ललाटिका सापि कुलक्षयकरी भवेत्॥८७॥**

ललाटी के बराबर कोई काष्ठ यदि तुला के उत्तरांग के उदर में न्यास किया जाय,तो उसे भी ललाटिका कहेंगे, वह कुल का नाश करती है ॥८७॥

**तुलापिण्डेन विन्यस्ता ज्ञेया यज्ञोपवीतिनी।**
**वसतो व्यसनं कुर्यात् कुटुम्बस्याऽसुखं च सा॥८८॥**

तुला के पिण्ड में विन्यस्त काष्ठ यज्ञोपवीतिनी कहा जाता है। उसमें निवास करने वाला महाव्यसनी होता है व समस्त कुटुम्ब दुःख भोगता है ॥८८॥

**यदि भारतुलैकापि मध्ये विद्धा कथञ्चन।**
**तदा वराङ्गं भज्येत धनं च परिहीयते॥८९॥**

भार तुलाओं में एक से भी मध्य (द्वार का मध्य) विद्ध हो जाय, तो वराङ्ग (वराङ्ग = शिर) भङ्ग हो जाता है और धन का नाश होता है ॥८९॥

**भित्तिभेदो न कर्तव्यस्तुलाग्रैर्निखिलैरपि।**
**कुर्याद् ब्रह्मपदान्यस्तो भारपट्टः कुलक्षयः॥९०॥**
**अयुक्तयोर्युक्तयोर्वा सन्धिश्चेद् भारपट्टगे।**
**सन्धौ स्यात्तत्सुतो ज्येष्ठः कर्तुश्चापि विनश्यति॥९१॥**

किसी भी तुलाग्रों से भित्तिभेद नहीं करना चाहिए और ब्रह्म पद में भी भारपट्ट एक वस्तु के साथ दूसरी वस्तु को लगाने में सन्धिदोष नहीं होना चाहिए। ऐसा करने से ज्येष्ठ पुत्र का नाश व कर्ता (स्थपति) का भी नाश होता है। अयुक्त या युक्तों की सन्धि में भारपट्ट के होने से भी उपर्युक्त फल होता है ॥९०-९१॥

शयनविषये–

**अनुवंशं न भुञ्जीत न शयीत कदाचन।**
**भुञ्जानस्यार्थनाशः स्याच्छयानस्य महारुजः ।।९२।।**

[1]अनुवंश में भोजन व शयन नहीं करना चाहिए, भोजन से अर्थहानि व शयन से महारोग होता है ।।९२।।

**नाशोऽनुवंशं रोगाः स्युस्तिर्यक्स्थे राक्षसो भयम्।**
**शयनागारविन्यस्ते मरणं नागदन्तके ।।९३।।**

अनुवंश में नाश व रोग तथा अनुवंश [2]तिर्यक्स्थ होने पर राक्षसभय, तथा शयनगृह में नागदन्त से मृत्यु होती है, शयनकक्ष में आसन पूर्व-पश्चिम या उत्तर-दक्षिण शुभ है ।।९३।।

गृहे काष्ठग्रहणे वैशिष्ट्यं सूत्रधारः–

**जीर्णं घुणक्षतं मिश्रं हीनं वक्रं विधिच्युतम्।**
**चण्डं तुण्डं वक्रकोणं सन्धिविद्धाल्पमूलके ।।९४।।**

जीर्ण-शीर्ण-घुणक्षत (कृमिविद्ध) कतिपय प्रकार का मिश्रित-प्रमाणहीन-वक्र-विधिच्युत-चण्ड-तुण्ड-वक्रकोण-सन्धि (मध्य में विवर, मध्यविवरयुक्त) जड़ का दुर्बल ये काष्ठ गृह में निषिद्ध हैं ।।९४।।

**वज्रमध्यं स्थूलमूलं कुक्षिभिन्नं च दारु यत्।**
**भिन्नमूलं कूर्मपृष्ठं पक्षहीनं च वर्जयेत्।।९५।।**

[3]वज्रमध्य-स्थूलमूलक-कुक्षिभिन्न-भिन्नमूल-कूर्मपृष्ठ-पक्षहीन काष्ठ गृहों में प्रयुक्त नहीं होना चाहिए ।।९५।।

**पतितान् वर्जयेद् वृक्षान् द्विपाश्वानिलानलैः।**
**प्रभूतपक्षिनिलयान् काककौसिकसेवितान्।।९६।।**

स्वयं पतित, हस्ति-अश्व-वायु व अग्नि के प्रहार से पतित, अनेक पक्षियों के घोंसले वाले, काक-गृद्ध-बाज हिंसक पक्षियों के निवास वाले वृक्षों को गृह में प्रयुक्त नहीं करना चाहिए ।।९६।।

**मधुग्रहपिशाचादि–दुष्टांश्चैत्यश्मशानजान् ।**
**चतुष्पथ–त्रिक–महानदी–संगममार्गजान्।।९७।।**

मधुमक्खी-पिशाच प्रभृति वासित दुष्ट-चैत्य-श्मशान-त्रि-चतुष्पथ-महानदी-संगम व मार्ग में उत्पन्न वृक्षों का भी त्याग उचित है ।।९७।।

---

१. तिर्यग्रेखा वास्तुपद में वंश है, कर्णाकार में भोजन व शयन का निषेध है। २. तिर्यक् कोणाकृति (शय्या) होने पर गृह में राक्षसभय होता है। ३. वज्रपात वृक्ष।

**देवतायतने जातानूर्ध्वशुष्कान् क्षतक्षदान्।**
**वल्लीपिनद्धान् सुषिर–कोटर–ग्रन्थिसंकुलान्।।९८।।**

देवसन्निधि में उत्पन्न, सूखी ऊपर की शाखा, भिन्नछाया, वेमु-अटिच्छादित, च्छिद्रकोटर व ग्रन्थिबाहुल्य वाले वृक्षों का भी गृह में उपयोग निषिद्ध है ।।९८।।

**याम्याऽपराशापतितास्त्यजेत् कण्टकिनोऽपि च।**
**कपित्थोदुम्बराश्वत्थ–शिरीषवट–चम्पकान् ।।९९।।**

छेदने पर भी दक्षिण-पश्चिम पतित, काँट वाले, कैथ-पीपल-गूलर-शिरीष-वट व चम्पा वृक्ष भी त्याज्य हैं ।।९९।।

**कोविदार–धवारिष्ट–श्लेष्मातक–विभीतकान् ।**
**किञ्च सप्तच्छदक्षीरिफलदांश्च द्रुमान् त्यजेत्।।१००।।**

कोविदार-धव-अरिष्ट-श्लेष्मातक-विभीतक-सप्तच्छद-दूध-पुष्प व फलवान् वृक्ष भी त्याज्य हैं। उपर्युक्त वृक्षों का उपयोग गृह में नहीं करना चाहिए ।।१००।।

**मर्माणि यत्र भिद्यन्ते[१] द्वारैर्भित्तिभिरेव च।**
**दारिद्र्यं कुलहानिं वा गृहिणस्तत्र निर्दिशेत्।।१०१।।**

द्वार या भित्ति से गृहमर्म वेधित होने पर दारिद्र्य, कुलहानि गृही को उठानी पड़ती है ।।१०१।।

**स्तम्भैर्विनश्यति स्वामी तुलाभिः स्त्रीवधो ध्रुवम्।**
**सङ्ग्रहैर्बन्धुनाशः स्याज्जयन्तीभिः स्नुषावधः।।१०२।।**

स्तम्भों के वेध से स्वामी, तुला से स्त्री, सङ्ग्रहों से बन्धु, जयन्ती से स्नुषा (भगिनी) का वध होता है ।।१०२।।

**मर्मस्थानस्थितैः कायैर्भर्तुः कायो निपीड्यते।**
**मर्मस्थैः सन्धिपालैस्तु सुहृदुद्वेगमादिशेत्।।१०३।।**

वास्तु का मर्मस्थान किसी भी वस्तु से ताडित होता है, तो स्वामी का शरीर पीडित होता है। मर्मस्थान व सन्धियों के विद्ध होने पर मित्रद्रोह होता है ।।१०३।।

**गृहीपीडा नागदन्तैर्नागपाशैर्धनक्षयः।**
**कपिच्छकैस्तु प्रेष्याणां क्षयं मर्मस्थितैर्भवेत्।।१०४।।**

---

१. पीड्यन्ते इत्यपि पाठः साधु ।

**स्तम्भैर्वा द्वारमध्यैर्वा तुलाभिर्नागपाशकैः।**
**वातायनैर्नागदन्तैर्द्वारमध्ये निपीडिते।।१०५।।**

नागदन्तों से मर्म विद्ध होने पर गृही पीड़ित होता है, नागपाशों से धन की हानि, मर्मस्थित कपिच्छकों से भृत्य पीड़ित होता है। स्तम्भ-[1]द्वारमध्य-तुला-नागपाश-वातायन-नागदन्तों से द्वार के बीच का भाग पीड़ित होने पर फल का सम्बन्ध अग्रिम श्लोक से स्पष्ट होगा ॥१०४-१०५॥

**व्याधयः संप्रवर्धन्ते धननाशः कुलक्षयः।**
**राजदण्डभयं च स्यादपत्यानां च पीडनम्।।१०६।।**

मर्मस्थान नागदन्त से विद्ध होने पर व्याधियों की वृद्धि, द्वारमध्य से धननाश, तुला से कुलक्षय, नागपाशों से राजदण्ड, वातायन व नागदन्तों से वंशपीडा होती है। अतः मर्मवेध त्याग देना चाहिए ॥१०६॥

**संविद्धा नागदन्तैर्या स्तम्भैर्वातायनैस्तथा।**
**शय्या शस्त्राद्भयं भर्तुः कुर्यात्तस्करतो भयम्।।१०७।।**

नागदन्त-स्तम्भ-वातायन व शय्या से विद्ध द्वार में गृहस्वामी को शस्त्र व चोरों का भय होता है ॥१०७॥

विशेषः—

**विभागपदहीनेषु रूपस्थानेषु वास्तुषु।**
**यक्षमातृक्रियाद्येषु रोगान्मृत्युर्न संशयः।।१०८।।**

वास्तु विभक्त समस्त अंगों में यदि कोई अंगहीन हो या वास्तुनिर्दिष्ट पदों में पदहीन हों तथा यक्ष व मातृकाओं की क्रियाओं में त्रुटियुक्त रूपस्थान हो, तो रोग व मृत्यु निःसन्देह होती है ॥१०८॥

समीपस्थवृक्षविषये सूत्रधारः—

**कटु—कण्टकि—दुर्गन्ध—गुह्यकाद्याश्रयान् द्रुमान्।**
**न धारयेत् समीपस्थान् पुरप्रासादवेश्मनाम्।।१०९।।**

कड़वे स्वाद वाले काँटे दुर्गन्ध युक्त-गुह्यकादि देवयोनियों के निवास वृक्षों को गृह-ग्राम-पुर के समीप नहीं स्थापित करे; क्योंकि इन वृक्षों का गृह व प्रासाद के समीप में निवास शुभ नहीं है ॥१०९॥

---

१. एक द्वार दूसरे द्वारमध्य से विद्ध होता है, अर्थात् सम्मुखद्वार निषिद्ध है।

अन्यदपि–

**वदरी कदली चैव दाडिमी बीजपूरिका।**
**प्ररोहन्ति गृहे यत्र तद् गृही न प्ररोहति।।११०।।**

बेर-केला-अनार-देशी (गागल) नींबू ये जिसके गृह में बढ़ते हैं, वह गृही नहीं बढ़ता है ।।११०।।

पुराणे तु–

**अश्वत्थश्च कदम्बश्च कदलीबीजपूरकौ।**
**गृहे यस्य प्ररोहन्ति स गृही न प्ररोहति।।१११।।**
**द्रव्यं द्रव्याधिकं हन्ति कुलमा[illegible]तोऽधिकम्।**
**उच्छ्रायाऽभ्यधिकं पूजां सन्ततिं [illegible]स्तराधिकम्।।११२।।**

पीपल-कदम्ब-केला-नींबू (गागल) जिस गृह में बढ़ते हैं, उसमें गृही नहीं बढ़ पाता है। गृह में प्रयुक्त होने वाले द्रव्य प्रमाण से अधिक द्रव्य के प्रयोग से द्रव्य की हानि, आयाम (दीर्घ) प्रामाण्य (विधिविहित) से अधिक होने पर कुल का नाश, उच्छ्रिति प्रमाणाधिक्य होने पर सम्मान की न्यूनता, विस्तार की अधिकता से सन्तति की हानि होती है ।।१११-११२।।

**एवंविधं दोषकरं गृहं स्याद्**
**भर्तुश्च कर्तुश्च यतस्तदेते।**
**ज्ञेया सदा शिल्पिभिरप्रमत्तैः**
**त्याज्याश्च दोषाः शुभकीर्तिकामैः।।११३।।**

उपर्युक्त यथोक्त प्रकरणों एवं संगृहीत गृहदोष प्रकरण में वर्णित दोषों का भलीभाँति विचार कर प्रमाणरहित द्रव्यों का शिल्पी को सावधानी से त्याग कर यश की कामना से निर्दिष्ट भवन का निर्माण करना चाहिए ।।११३।।

**।। इति विधिविहितविरुद्धगृहनिर्माणोत्पन्नदोषसङ्ग्रहं नाम षड्विंशतितमं सोपानम्।।**

O

## अथ निर्मितगृहे जातापशकुननिरूपणपूर्वकं तच्छान्ति-करणविधानं नाम सप्तविंशतितमं सोपानम्

तत्र तावद्दोषाः–

**कर्णिका रोपिता यत्र पुनरुत्पाट्य रोपयेत्।**
**न तन्निष्पद्यते वेश्म स्वामी चात्र विनश्यति।।१।।**

विधिविहित कर्णिका का रोपण किया जाय; किन्तु पुनः रोपित कर्णिका को उखाड़ कर दूसरे भवन में यदि रोपित किया जाय, तो (उत्थापित व रोपित) भवन सम्पन्न नहीं होता है और गृहस्वामी का भी विनाश होता है ।।१।।

**निखातं तु यदा दारु च्छिद्यते पीड्यते पुनः।**
**तन्नाशो धन–धान्यस्य स्वामिनश्चात्र सर्वथा।।२।।**

भवन में प्रयुक्त काष्ठ को उखाड़ा-काटा या पीडित किया जाय, तो धन-धान्य तथा स्वामी के लिए अनिष्ट है ।।२।।

**वल्ली–निपीडितं दारु तस्मिन्नुत्पातलक्षणम्।**
**आशीविषमयं घोरं तस्मिन्नुत्पातलक्षणम्।।३।।**
**उत्थाने कर्णिका रथ्या सर्वसत्त्वाभिघर्षणात्।**
**नवे कर्मण्यशकुना मृगव्यालसरीसृपाः।।४।।**

[1]वल्ली से निपीड़ित काष्ठ से घोर सर्पभय उत्पन्न होता है। कर्णिका के उठाने पर सभी प्राणियों में संघर्ष उत्पन्न होता है। प्रारम्भ कार्य के समय मृग व व्याल का दर्शन अपशकुन है। यदि व्याल या सर्प [2]कर्णिका पर चढ़ जाय तो गृह व गृहस्वामी के लिए अमांगलिक होता है ।।३-४।।

**कृतां पीडां परिहृतां यद्वाऽऽरोहन्ति वायसाः।**
**गृहिणस्तत्प्रवासः स्यादन्नं पानं च हीयते।।**
**मयूरे तद्गृहं राजा हरेत् पञ्चाब्दतः परम्।।५।।**

[3]कर्णिका के आनयन के समय यदि पीड़ा होती है या उस पर कौआ (काक) बैठ जाय, तो गृही का प्रवास और अन्न-जल की न्यूनता होती है। मयूर के चढ़ने पर ५ वर्ष के अन्दर वह घर राजा से या दुष्टों के द्वारा छीन लिया जा सकता है ।।५।।

---

१. वल्ली (लोकभाषा में धरणी कहते हैं),अर्थात् छत के नीचे का काष्ठ सहतीर टूट जाय तो।
२. पताका की डण्डी । ३. आनयन समयोत्पन्न वेदना ।

**वराङ्गे जायते व्याधिः कोकिलैर्द्व्यब्दतः परम्।**
**काकोलैस्त्रीणि वर्षाणि जायते सुमहद्भयम्।।६।।**

यदि कर्णिका पर कोयल बैठ जाय तो दो वर्ष बाद शिर में भयङ्कर पीड़ा होती है। काकोली (उलूक) के बैठने पर तीन वर्ष के बाद भयङ्कर भय उत्पन्न होता है ।।६।।

**शुके स्युः कलहाद्यानि न च निष्पद्यते गृहम्।**
**कुक्कुटेऽग्निभयं विद्याद्राजतो वा महद्भयम्।।७।।**

शुक के आरोहण पर कलह प्रभृति उपद्रव होते हैं। कुक्कुट के आरोहण से अग्नि का भय या राज्य से महद्भय उत्पन्न होता है ।।७।।

**सारिकायां तु दौःशील्यं स्त्रीणां गृहपतेस्तथा।**
**सर्पारूढे तु विघ्नेन गृहं निष्ठं च जायते।।८।।**

[1]सारिका पक्षी विशेष के आरोहण पर स्त्रियों व गृहपति की दुःशीलता बढ़ती है, सर्पारूढ़ होने पर वह विघ्न का स्थान बन जाता है ।।८।।

**स्त्रीपुंसयोः कलिङ्गे तुं जायते पापकारिता।**
**पारावते तु जायेते स्त्रीपुंसौ गुरुतल्पगौ।।९।।**

कलिङ्ग के अधिरोहण पर स्त्री-पुरुषों में पापकर्म करने की प्रवृत्ति बढ़ती है। पारावत के अधिरोहण से स्त्री-पुरुष दोनों गुरुतल्पी होते हैं ।।९।।

**विडाले तु कुलं दासैः रोगैः सह निपीड्यते।**
**ज्वलनो वा जलं वापि हस्ती वा हन्ति तद्गृहम्।।१०।।**
**आरण्यैः शकुनैरेतत् स्याद्वर्षाद्घर्षणे फलम्।**
**युवा च जायते मृत्युर्मध्वासङ्गैर्धनक्षयः।।११।।**

इन आरण्यक शकुनों से १ वर्ष के अन्दर फल घटित होने की सम्भावना है। इसमें अग्नि-वर्षा व हस्ती उसे नष्ट कर देते हैं और युवा की मृत्यु सम्भव है। मधु-मक्खियों के लगने से धनक्षय होता है ।।१०-११।।

**दुःस्वप्नदर्शनं धूके बालानां मरणं तथा।**
**त्रस्तभीते निलीने तु राजा शून्यं हरेद् गृहम्।।१२।।**

---

१. लोकभाषा में 'मैना' कहते हैं।

**यदा त्वग्रे प्रदृश्येत धूम्रः कर्णगतोऽपि वा।**
**अग्निर्दहति तत्क्षिप्रं विद्युद्वा हन्ति मन्दिरम्।।१३।।**
**यत्रारोहति गृध्रस्तद् द्विजानङ्घ्रिं स्पृष्टमाचरेत्।**
**कृत्वा हलशतैः कृष्टं ततो बीजानि वापयेत्।।१४।।**
**गावश्चात्र प्रदुह्येरन् शान्तिकानि च कारयेत्।**
**मेघेऽभिवृष्टे भूयोऽपि तत्र कुर्वीत मन्दिरम्।।१५।।**

उल्लू पक्षीविशेष जो रात्रि में चलता है, उसके आने या देखने से दुःस्वप्न या बालकों की मृत्यु होती है। भयभीत कोई पक्षी-पशु यदि घर में या निर्माण की भूमि में छिपा हुआ दीख पड़े, तो वह घर प्राणिहीन हो जाता है और उसे राजा ले लेता है। भूमि या घर के कोण में धूँआ परिलक्षित हो, तो वह अग्नि या विद्युत् से नष्ट हो जाता है। जिस भूमि या घर पर गृद्ध बैठ जाय, तो उसे ब्राह्मणों के चरणों या चरणोदक से स्पर्श या सिंचन कराया जाय, भूमि को सौ बार हल से जोतकर बीज बोया जाय और घर की पूर्ण शान्ति करायी जाय और दूसरे वर्षाॠतु के बाद (जलप्रवर्षण) के बाद घर का निर्माण किया जाय, भूमि व घर दोनों की शान्ति भी करानी चाहिए और गायों का अधिवास और दोहन भी शान्ति का ही अंग है ॥१२-१५॥

**येषु येषु गृहाङ्गेषु मधुनः सञ्चयो भवेत्।**
**तस्याङ्गस्य वधं कुर्यात् प्रेषिण्याञ्चाप्युपद्रवम्।।१६।।**
**तस्माद्धेतोः शिखाग्रेषु मुकुटान् प्रणिधापयेत्।**
**यावन्न रोपयेत्सौम्यं तावद्रक्षेत्स यत्नतः।।१७।।**

भूमि या घर के जिस अंग में मधुमक्खियाँ मधु चयन की हों, उस अंग को नष्ट कर देना चाहिए और प्रेषणी से अशान्ति होनी चाहिए। अतः घर के शिखा भाग को वस्त्रादि छत्रों से आच्छादित (आवृत) कर देना चाहिए और पूर्ण निर्माण पर्यन्त उसकी रक्षा करनी चाहिए ॥१६-१७॥

अन्ये चोपद्रवास्तत्रैव–

**भङ्गे गृहाणां दारूणां शान्तिहोमोऽथ कथ्यते।**
**इन्द्रकीलो महाकूटः पृष्ठवंशोत्तरौ धरौ।।१८।।**

**प्रग्रहोऽलिन्दपादौ वा स्वामिनां घ्नन्त्युपद्रवाः।**
**तुलास्थपत्यः कूटं वा वेदिका कर्णपालिका।।**
**नेत्रं कपोतपालिश्च [१]हनप्रविष्टं कुटुम्बिनः।।१९।।**

घर में प्रयुक्त या प्रयोग के लिए संग्रहीत वस्तु टूट जाय, यथा इन्द्रकील- महाकूट-पृष्ठवंश-आधारवंश-रस्सी-अलिन्दपाद के टूटने पर गृहस्वामी की मृत्यु की सूचना है। तुला के टूटने पर स्थपति कूट-वेदी कर्णपाली नेत्र-कपोलपाली के हनन से कुटुम्ब का हनन होता है ॥१८-१९॥

**नवे गृहे नवं दारु क्रियमाणमथोऽकृतम्।**
**आयोज्यमानं युक्तं वा न्यूनं संवत्सरं स्थितम्।।२०।।**
**भज्यते देहनाशाय स्फुटत्यथ विभज्यते।**
**गृहं ब्राह्मणसात्कृत्वा रत्नैरालिख्य चापरम्।।२१।।**
**दग्धे भिन्ने प्रचलिते विनते विद्युताहते।**
**विरूढे दलिते सन्ने सर्वत्रौषधिभिः स्मृताः।।**
**शान्तयो विविधं हुत्वा ब्राह्मणान् स्वस्ति वाच्य वा।।२२।।**

नूतन गृह में नूतन लगा हुआ काष्ठ या प्रयोग के लिए लाया हुआ काष्ठ यदि एक वर्ष के अन्दर टूटे तो घर नष्ट होने का संकेत है। टूट जाय या फट जाय तो शरीर के नाश का संकेत है और उस घर को ब्राह्मणों के अधीन करके रत्नों से पुनः दूसरा आलेख (चित्र बनाना चाहिए), दग्धभिन्न-स्थानभ्रष्ट-नमन-दलितसन्न-विद्युत् से हत होने पर सर्वौषधियों के साथ सिंचन-हवन-स्वस्तिवाचन प्रभृति अथवा शान्ति करके ब्राह्मणों को मधुर भोजन देना चाहिए ॥२०-२२॥

**स्थूणिका भज्यते यस्य कीर्तिस्तस्योपहन्यते।**
**चन्द्रसूर्यौ यजेत्तत्र ततः शाम्यति पातकम्।।२३।।**
**तद्विधं वृक्षमानीय पुनस्तां प्रतिरोपयेत्।**
**एवं कृते सुखी स स्यात् कीर्तिश्चायुर्ध्रुवा भवेत्।।२४।।**

---

१. हते नष्टा कुटुम्बिन इति भवितव्यम्।

स्थूणिका के भंग होने पर कीर्ति नष्ट होती है। इसमें चन्द्र-सूर्य प्रभृति नवग्रह शान्ति व शुभ मांगलिक वृक्ष के रोपण से सुखी-सन्तुष्ट-सम्पन्न व यश स्थायी होगा ॥२३-२४॥

सर्वेषामुपद्रवाणामुपशमो यथा सूत्रधारः–

**उक्तास्तत्र बलीन् कुर्यात् प्रायश्चित्तं तथा चरेत्।**
**एवं धन्यं शिवं पुष्टिः प्रजावृद्धिकरं भवेत्॥२५॥**
**एवं निमित्तानि गृहाश्रितानि**
**ज्ञात्वा प्रहृष्टान् शकुनांश्च सर्वान्।**
**शान्तिं प्रकुर्वन् पृथगुक्तरूपान्**
**प्राप्नोति कीर्तिं सुखमर्थमाहुः॥२६॥**

इस प्रकरण में अथवा यथावसर प्रकरणोक्त तथा अन्य लोक व शास्त्रीय अपशकुनों के उपस्थित (आपतित) होने पर यथोक्त शास्त्रविधि से सर्वौषधि प्रभृति प्रकरणोक्त विधिविहित पद्धति के अनुसार वास्तुशान्ति (पुण्याहवाचन-स्वस्तिवाचन प्रभृति सर्वाङ्ग) अभिषेकादि यथोक्त विधि कराने से गृही सुखी-आरोग्य-धन-आयु से पूर्ण शान्ति की अनुभूति करेंगे ॥२५-२६॥

**॥ इति गृहदोषोपशान्तिनामकं सप्तविंशतितमं सोपानम् ॥**



## अथ यथासम्भवप्राप्तवास्तुसम्बन्धिविधानवर्णनं नाम अष्टविंशतितमं सोपानम्

वास्तौ हस्तप्रमाणेऽधिकारिणो विश्वकर्मप्रकाशे—

**स्वामिहस्तप्रमाणेन ज्येष्ठपत्नीकरेण च।**
**गर्भमानं भवेद्गेहं नृणां प्रोक्तं सुरोत्तमैः ।।१।।**

हस्तमानन्तु—

**षडक्षतैराज्यमिहाङ्गुलं भवेत् सप्ताक्षतैर्वैष्णवमैशमङ्गुलम्।**
**यवोदरैरष्टभिरत्र तत्करो जिनाङ्गुलैस्तैश्च धनुश्चतुष्करैः ।।२।।**

कुत्र को हस्तः प्रशस्तः—

**प्रासादकुड्यादिषु पीठवेदिका द्विजालयेषु स्मृतराज्यमङ्गुलम्।**
**जलाशयारामविधौ नृपालये विधौ हितं वैष्णवमन्यदन्यगम् ।।३।।**

प्रासाद भित्ति प्रभृति वेदिका, ब्राह्मणों (द्विजों) के गृहनिर्माण में राज्याङ्गुल निर्मित हाथ ग्रहण करें। जलाशय-बगीचा-उद्यान व राजा के गृह में वैष्णव अंगुल से उत्पन्न (निर्मित हाथ) ग्रहण किया जाय और इनसे भिन्न गृहों में इन दोनों से भिन्न हाथ प्रमाण प्रमाणित है ॥१-३॥

तत्रापि हस्तमाने वैशिष्ट्यं विश्वकर्मणा—

**अनामिकान्तं हस्तः स्यादूर्ध्वबाहुशरांशकः।**
**कनिष्ठिकामध्यमाभ्यां वा प्रमाणं नैव कारयेत्।।४।।**

केहुनी (हाथ के मध्यभाग को कहते हैं) के ग्रन्थि से अनामिका के अन्त तक हाथ का प्रमाण होता है। अथवा चरणतल से ऊर्ध्वबाहु के पञ्चमांश के बराबर व्यक्ति के निजी प्रयोग के लिए निजी हाथ होता है। हाथ प्रमाण में कनिष्ठिका-मध्यमा-तर्जनी व अंगुष्ठ का प्रमाण नहीं है ॥४॥

गृहचिन्तामणौ तु—

**गृहे मृण्मये मानमन्तःप्रमाणं तथा चेष्टिकाभित्तिमानं तदर्धम्।**
**तथा चोत्पलानां सभित्या सदैव प्रकुर्याद्बुधश्चान्यथा वित्तनाशम् ।।५।।**

पिण्ड का प्रमाण—

मिट्टी की दीवार पिण्ड से बाहर, ईंट की दीवार की आधी दीवार और पत्थर की समस्त दीवार पिण्ड के अन्दर होनी चाहिए। इससे भिन्न होने पर अंकुशल होता है ॥५॥

अत्रैवाऽन्यदपि वैशिष्ट्यम्–

**अङ्गेषु वङ्गेषु कलिङ्गदेशे सौराष्ट्रदेशे मगधमध्यदेशे।**
**मरुज्जले सिन्धुगिरिप्रदेशे सभित्तिमानं कथितं मुनीन्द्रैः ।।६।।**

अङ्ग-वङ्ग-कलिङ्ग-सौराष्ट्र-मगहर (बिहार) मध्य-मरुस्थल-जलस्थान-(अनूप) सिन्धुघाटी-सैन्धव-पर्वत के तलहटी इन सभी स्थानों में पिण्ड के अन्दर ही भित्ति होनी चाहिए, यही अतीत की परम्परा भी है ॥६॥

अत्रैव नारदस्तु–

**केचिद्वदन्ति दैवज्ञा गर्भमानं गृहं भवेत्।**
**गृहं हि भित्तिसहितं श्रेष्ठं देवर्षिसम्मतम्।।७।।**

देवर्षि नारद की परम्परा के अनुसार भित्तिसहित पिण्ड होना चाहिए; क्योंकि यही परम्परा देवर्षि से समादृत है । यहाँ पूर्वार्द्ध में केचिन्मत का उद्धरण मात्र है, न कि प्रामाणिक है ॥७॥

अजिरं गृहमध्यभागं प्राङ्गणसंज्ञकं तद्विचारश्चात्र वास्तुशास्त्रे–

**दीर्घविस्तारसंख्यैक्ये चाष्टभिर्गुणिते तथा।**
**नवभिस्तु हरेद्भागं शेषं तस्करतो भवेत्।।८।।**

फलं यथा–

**तस्करभोग–विचक्षण–दातानृपति–नपुंसकाः ।**
**अभयं चैव दारिद्र्यं धनाढ्यं नवमं भवेत्।।९।।**

अजिर में दीर्घ+विस्तार × ८÷९ = शेष में तस्करादि क्रम से फल का ज्ञान किया जाय ॥८-९॥

अत्रैव गृहचिन्तामणौ–

**दीर्घविस्तारसंख्यैक्ये गुणिते चान्द्रमानतः।**
**नवभिस्तु हरेद्भागं शेषमजिरमुच्यते।।१०।।**
**दाता विचक्षणो भीरुः कलहो नृपदानवौ।**
**क्लीबश्चौरो धनी चेति नामतुल्यफलप्रदम्।।११।।**

इस प्रकार में (दीर्घ+विस्तार) १÷९ = शेष में दाता प्रभृति फल समझा जाय ॥१०-११॥

**विशेष–** पाठकों को दोनों प्रकार में मतभेद नहीं होना चाहिए; क्योंकि फलश्रुति समान है, मात्र प्रक्रिया भिन्न है।

गृहस्रावेऽपि तत्रैव–

**धनधान्यमीशानवायव्यकोणे तथा चोत्तरे चोत्तमं मङ्गलं स्यात् ।**
**नृणामालये वारिसञ्चारपाथो विलं कर्तुमाहुर्धरादेव[1] चान्यः ।।१२।।**

जिस भूमि पर जलप्रवाह (बहाव) ईशान-वायव्यकोण या उत्तर की दिशा में हो तो धन-धान्य तथा मङ्गल की वृद्धि होती है, इन्हीं दिशाओं में एक भौमिक गृह में भी नाबदान (बिल के आकार में) जलनिकास बनाना चाहिए ॥१२॥

प्रसङ्गाच्चन्द्रवासस्तत्फलं च–

**तिथिः पञ्चगुणा कार्या वारर्क्षेण समन्विता ।**
**वह्निभिस्तु हरेद्भागं शेषाङ्के फलमादिशेत् ।।१३।।**

$$\frac{\text{तिथिसंख्या} \times ५ + \text{दिनसंख्या} + \text{नक्षत्र-संख्या}}{३} = \text{शेष से}$$

= चन्द्रमा का वास होता है ॥१३॥

**एकशेषे वसेत् स्वर्गे द्विशेषे तु रसातले ।**
**शून्यशेषे मृत्युलोके चन्द्रवासः प्रजायते ।।१४।।**

१३ श्लोकानुसार १ शेष में स्वर्ग, २ शेष में पाताल, शून्य शेष में मृत्युलोक में चन्द्रमा का वास होता है ॥१४॥

चन्द्रवासफलञ्च तत्रैव–

**रसातले यदा चन्द्रः पञ्चकर्माणि वर्जयेत् ।**
**कूपवाप्यादिकारम्भे जलञ्चैव न जायते ।।१५।।**
**बीजोप्तौ बीजनाशः स्याद्यात्रायां कार्यनाशनम् ।**
**विद्यारम्भे भवेन्मूर्खस्तस्माच्चन्द्रं विचारयेत् ।।१६।।**

यदि चन्द्रमा पाताल में वास करते हैं, तो पाँच कार्य (यात्रा-बीजवपन-विवाह-प्रवेश व चूड़ाकर्म) निषिद्ध हैं । इनमें कृतकार्य का फल-कूप जलाशयारम्भ में जलाभाव, बीजवपन में बीजनाश, विद्याभ्यास में मूर्खता, यात्रा में कार्य की हानि होती है ॥१५-१६॥

तत्रैव जलज्ञाने च–

**तिथिवारञ्च नक्षत्रं चैकीकृत्य युगैर्भजेत् ।**
**चैकशेषे नागलोके द्विशेषे सलिले जलम् ।।**

१. स्पष्टोक्ति होने से ही उद्धृत है ।

**त्रिशेषे भूतले वारि शून्ये स्वर्गे फलं तथा।।१७।।**

प्रकारान्तरेण तस्यैव फलम्–

**एकशेषे जलं नास्ति द्विशेषे जलबाहुलम्।**
**तृतीये तु जलाधिक्यं शून्ये शून्यजलं भवेत्।।१८।।**

उपर्युक्त सार्द्धश्लोकद्वय स्पष्ट हैं ॥१७-१८॥

जलाशये निर्झरज्ञानम्–

**नृग्रामदिक्स्वरैक्ये तु सूर्यर्क्षेण समन्वितः।**
**नागैश्च विभजच्छेषे पूर्वादौ निर्झरो भवेत्।।१९।।**

अन्यच्च–

**तिथिवारञ्च नक्षत्रं वेदाढ्यं च वसूद्धृतम्।**
**शेषात्पूर्वादितो दिक्षु निर्झरः कूपकर्मणि।।२०।।**

निर्झर जलाशय में भूमिविवर से प्रवाहित जलस्रोत को कहते हैं, अन्यत् स्पष्ट है ॥१९-२०॥

राशिवशाज्जलज्ञानम्–

**नृचतुष्पादकीटाख्याज्जलं हस्तप्रमाणतः।**
**नृराशौ तु चतुर्विंशे द्वाविंशे च चतुष्पदे।।२१।।**
**कीटे तथैकोनविंशाख्येऽष्टाविंशे च वारिभे।**
**कूपवाप्यादिकार्येषु जलयोगं विनिर्दिशेत्।।२२।।**

मानवादि राशि के अनुसार जलप्राप्ति के हाथ प्रमाण कहते हैं। प्रश्न के समय लग्न की राशि नृराशि (मानव राशि) हो तो समतल से २४ हाथ के नीचे, चतुष्पद में २२ हाथ के नीचे, कीटराशि में १९ हाथ व जलराशि में २८ हाथ के नीचे जल की प्राप्ति होगी; किन्तु यह प्रमाण अनूप व जांगल प्रदेश के लिए है। मरुस्थल प्रस्थबाहुल्य देश के लिए वराहोक्त प्रकार का अवलोकन किया जाय ॥२१-२२॥

पुनरपि प्रकारान्तरम्–

**तिथिवारञ्च नक्षत्रं नामाक्षरसमन्वितम्।**
**अष्टभिर्गुणितं चैव षट्त्रिंशेन विभाजितम्।।**
**शेषहस्तप्रमाणेन जलं प्रोक्तं पुरातनैः।।२३।।**

वर्तमान प्रश्न के समय की तिथि नक्षत्रयोग को नामाक्षर संख्या में जोड़कर ८ से गुणे व ३६ से भाग दें, शेषतुल्य हाथ के अनुसार जल के स्तर का ज्ञान होता है।

$\frac{८ \text{ (ति+न+नामाक्षर)}}{३६}$ = शेषतुल्य हाथ के नीचे जलस्तर है, ऐसा कहना चाहिए ॥२३॥

खन्यमाने जलाशये जलस्तरीयभूप्रकारः–

**द्विगुणं दिक्स्वरं कृत्वा ग्रामस्वरसमन्वितम्।**
**वसुभिश्च हरेद्भागं शेषाङ्के च फलं दिशेत्॥२४॥**

शेषक्रमेण भूस्वरूपम्–

**कृष्णा पीताऽरुणा शुभ्रा केङ्करं घोघिलं तथा।**
**वालुका निर्मला चैव इत्युक्तं ब्रह्मयामले॥२५॥**

प्रश्नकर्ता के स्थित दिशा की स्वरसंख्या की द्विगुणित संख्या में ग्रामस्वर की संख्या का योग किया जाय और उस योग में ८ से भाग, शेष क्रम से भूस्वरूप का निश्चय किया जाय, यथा १ शेष से कृष्णा, २ शेष से पीली, ३ शेष से लाल, ४ से शुभ्र (श्वेत), ५ से केङ्कर[1], ६ से घोघिल[2], ७ से वालुकामिश्रित मृत्तिका व ८ शेष से श्वेत वालुका के रूप में मृत्तिका होगी, यह ब्रह्मयामल के अनुसार उद्धृत है ॥२४-२५॥

पुनस्तत्रैव–

**नक्षत्रतिथिवारञ्च कर्तुर्नामाक्षरैर्युतम्।**
**वेदैश्च विभजेद् धीमान् शेषाङ्के फलमादिशेत्॥२६॥**
**एकशेषे जलं पूर्णं द्विशेषे [3]शर्करान्वितम्।**
**वालुका वह्निशेषे तु शून्ये शून्यफलं भवेत्॥२७॥**

नक्षत्र-तिथि-वार-नाम के अक्षरों के योग में ४ से भाग, शेष में फल-क्रम से १ शेष में पूर्णजल, २ शेष में कङ्कणमिश्रित बालू (लोक में सोहरा बालू मिट्टी मिश्रित जलस्राव), ३ शेष में बालुका व शून्य शेष में शून्य जलाभाव का लक्षण है ॥२६-२७॥

प्रज्वलितदीपद्वारा जलज्ञानम्–

**ईशानादिचतुर्दिक्षु दीपं प्रज्वालयेद् बुधः।**
**दीपः कर्दमसंल्लग्नस्तत्राम्बुश्च प्रजायते॥२८॥**

जल परीक्षण भूमि के ईशानादि चारों दिशाओं में चार दीप प्रज्वालित करके यथास्थान स्थापित किया जाय और जिस दीप के नीचे दीपाधोभाग कीचड़ से युक्त हो जाय, तो वहाँ जल है ॥२८॥

१. कङ्कणमिश्रितमृत्तिका। २. गीली कठोर मृत्तिका-लोकभाषा में कचैटी कहते हैं।
३. शर्करा-मृत्तिका-मिश्रित जलस्राव।

**विशेष–** उपर्युक्त अक्षुण्ण परम्परा से प्राप्त जलज्ञान प्रकार बाहुल्य में बहुमत पक्ष को ही ग्रहण करना चाहिए अथवा जिस प्रकार में गणित बाहुल्य हो, उसी का प्रयोग अनुभवोपरान्त करना श्रेयस्कर है।

निवासे जलाशये देवालये च सूर्यचन्द्रवेधो यथा–

**दक्षिणोत्तरयोर्दैर्घ्ये वेधश्चान्द्रमसः स्मृतः।**
**पूर्वपश्चिमयोर्दैर्घ्ये वेधः कर्मणि नीयते।।२९।।**
**ग्रामे क्षेत्रे गृहे वेद्यां तडागे वाटिकासु च।**
**शुभदश्चन्द्रवेधः स्याद्रवेः [1]कोष्ठेऽग्निजीविनाम्।।३०।।**
**जलाशये रवेर्वेधो गृहे चन्द्रमसः शुभः।**
**वाटिकायां द्वयोर्वेध इति विज्ञा वदन्ति च।।३१।।**

इति स्पष्टार्था इमे श्लोकाः ॥२९-३१॥

गृहद्वयसंयोगफलम्–

**न गृहद्वयसंयोगं कुर्युः खलु मनीषिणः।**
**गृहत्रयाणां संयोगो भवेच्छुभफलप्रदः।।३२।।**
**गृहभित्तिषु ये लग्नास्ते गृहा गृहिणां सदा।**
**भयदाः पुत्रसन्तापकारकास्तन्न कारयेत्।।३३।।**
**अजिरे गृहबाह्ये तु चालिन्दं गृहरक्षकम्।**
**अनेक–स्तम्भ–कलशैर्युता तत्र समाहृताः।।३४।।**

दो भवनों का निर्माण एक भित्ति पर नहीं होना चाहिए; किन्तु यदि तीन गृहों का सम्बन्ध हो तो शुभ है। भित्ति से संल्लग्न ही गृही का गृह संयुक्त कहा जाता है, जो सम्बन्ध भयदायी, पुत्रसन्तापकारक होता है।

अजिर आँगन तथा अलिन्द गृह के भीतर व बाहर से गृह की रक्षा के रूप में होता है। यह अलिन्द अनेक स्तम्भों व कलशों से परिपूर्ण होना चाहिए ॥३२-३४॥

दीर्घविस्तारसाधनम्–

**विस्तारेण हरेत् पिण्डं दीर्घं दीर्घेण विस्तृतिः।**
**शेषं चतुर्विंशगुणं विस्तारेणैव भाजितम्।।३५।।**
**अङ्गुलं शेषमष्टघ्नं विस्तारेण विभाजितम्।**
**यवो भवत्यङ्गुलादीन् दीर्घे देयान्न विस्तृतौ।।३६।।**

---

१. गोष्ठे इति साधु प्रतीयते। गोष्ठ = गोशाला।

साधित पिण्ड में विस्तार से भाग देने पर लब्धि दीर्घ लम्बाई व दीर्घ से भाग देने पर चौड़ाई (विस्तार) होती है। शेष को २४ से गुणकर विस्तार से भाग देने पर लब्धि अंगुल व अंगुल शेष को ८ से गुणे व विस्तार से भाग में लब्धि यव होगा, ये दोनों यव व अंगुल सर्वथा दीर्घ के साथ ही जोड़े, विस्तार के साथ अंगुलादि कभी भी नहीं जोडना चाहिए ।।३५-३६।।

हस्तग्रहणे विशेष:–

**गृहं स्वामिहस्तप्रमाणेन कार्यं तथा सूनुहस्तेन भार्याकरेण ।**
**सुहृद्धस्तमानेन पुत्रप्रियायाः करेणैव सद्म प्रकुर्यात्सुखार्थी ।।३७।।**
**गुरोः पुरोधसश्चैव तथा भ्रातृकरेण च ।**
**भूमिपालस्य हस्तेन गृहमानं महीसुराः ।।३८।।**

स्पष्टार्थः ।।३७-३८।।

पूर्वं गृहारम्भे दिग्ज्ञानम्–

**उदीचीं विन्यसेदादौ पश्चाद्याम्यन्तु विन्न्यसेत् ।**
**तद्गृहं विद्यते तत्र पुत्रदारादिनाशनम् ।।३९।।**
**दक्षिणेऽन्ते दिग्विषये भवनेऽर्थक्षयोऽङ्गनादोषः ।**
**सुतमरणं प्रेक्षत्वे भवति तत्र वासिनां पुंसाम् ।।४०।।**

प्रथम उत्तर दिशा में प्रारम्भ व दक्षिण दिशा में समाप्त होने वाला गृह पुत्र-स्त्री-अर्थनाशक व देवेक्षित भवन में निवास करने वाले के पुत्र की मृत्यु होती है ।।३९-४०।।

अन्यदपि–

**प्रथमं दक्षिणे कार्यं पश्चात्कुर्यात्तथोत्तरम् ।**
**तथैव पश्चिमे पूर्वे कृतं मध्यगतं गृहम् ।।**
**तथैव सुखदं प्रोक्तं सदनं पश्चिमे स्थितम् ।।४१।।**

प्रथम दक्षिण प्रारम्भ पश्चात् उत्तर में समाप्त व पश्चिम प्रारम्भ कर पूर्व में समाप्त भवन सुखदायी होता है, केवल पश्चिम शाला का गृह भी सुखद होता है ।।४१।।

गृहदशाविचारे स्थाननिर्देशः–

**कुर्याद् गृहात्तडागाच्च दशा चिन्त्या तथा पुरात् ।**
**गेहाच्च शुभदं स्थानं सर्वस्थानाच्छुभप्रदम् ।।४२।।**

यदि अपने पूर्व निवास से दूसरा निवास का निर्माण करना हो, तो दशाशुद्धि के लिए पूर्व निवास-कूआँ-बावली-तालाब-पुर-नगर या देवस्थान से प्राप्त शुभ दशा के स्थान पर भवन निर्माण कराना चाहिए ॥४२॥

अथ भूग्रहणेऽग्निपुराणे, भूमिग्रहणविधाने हयग्रीववचनम्–

**क्रमशस्तु शोधितायान्तु कुर्याद्भूमिपरिग्रहम्।**
**प्राकारसीमापर्यन्तं ततो भूतबलिं हरेत्॥४३॥**
**माषं हरिद्राचूर्णन्तु सलाजं दधिसक्तुभिः।**
**अष्टाक्षरेण संयुक्तं पातयित्वाष्टदिक्षु च॥४४॥**
**राक्षसाश्च पिशाचाश्च येऽस्मिन् तिष्ठन्ति भूतले।**
**[1]सर्वे ते व्यपगच्छन्तु स्थानं कुर्यादहं हरेः॥**
**हलेन दारयित्वा गां गोभिश्चैवावधारयेत्॥४५॥**

देवमन्दिर या गृहनिर्माण हेतु सर्वप्रथम प्रश्नाक्षर शकुनादि विधि से संशोधन करके भूमिसीमा अथवा द्विगुणित सीमापर्यन्त भूमि पर भूतापसरण-पूर्वक उड़द-चावल-दही-हरिद्राचूर्ण-लावा-सत्तू यथोक्त दीपक को भूमि के समस्त अन्तिम भाग में रखकर नामाक्षरों से उपर्युक्त बलि देकर निम्न मन्त्र पढ़ना चाहिए अथवा आठों दिशाओं में उक्त वस्तु रखकर मन्त्र पढ़े।

मन्त्र–

**राक्षसाश्च पिशाचाश्च येऽस्मिन्तिष्ठन्ति भूतले।**
**सर्वे ते व्यपगच्छन्तु स्थानं कुर्यादहं हरेः॥**

यहाँ हरि शब्द उपलक्षण है। अतः सम्बन्धित देव या गृह के शब्द का प्रयोग करना श्रेयस्कर है। भूतबलि के बाद हल से जोतकर गौ का वास कराने पर वह भूमि निर्माण योग्य हो जाती है ॥४३-४५॥

अत्रैव हस्तप्रमाणञ्च–

**परमाण्वष्टकेनैव रथरेणुः प्रकीर्तितः।**
**रथरेण्वष्टकेनैव त्रसरेणुः प्रकीर्त्यते॥४६॥**
**तैरष्टभिस्तु बालाग्रं लिक्षा तैरष्टभिर्मता।**
**ताभिर्यूकाष्टभिः ख्याता ताश्चाष्टौ यवमध्यमः॥४७॥**
**यवाष्टकैरङ्गुलं स्याच्चतुर्विंशाङ्गुलैः करः।**
**चतुरङ्गुलसंयुक्तः स हस्तः पद्मसंज्ञकः॥४८॥**

---

१. सर्वे ते इति भवितव्यम्।

आठ परमाणु का एक रथरेणु, आठ रथरेणु का एक त्रसरेणु, आठ त्रसरेणु का एक बालाग्र और आठ बालाग्र का एक लिक्षा, आठ लिक्षा का एक यूका, आठ यूका का यवोदर (यव का फटा भाग), आठ यवोदर का एक अंगुल व २४ अंगुल का एक हाथ व २८ अंगुल का एक पद्म हाथ होता है। यह पद्म विष्णु प्रतिमा या मन्दिर निर्माण के प्रयोग में लिया जाता है। यह प्रमाणान्तरों से सिद्ध है ॥४६-४८॥

तत्रैवाग्निपुराणे वास्तुलक्षणमग्निमुखाद् यथा—

**वास्तुलक्ष्म प्रवक्ष्यामि विप्रादीनाञ्च भूरिह।**
**श्वेता रक्ता तथा पीता कृष्णा चैव यथाक्रमम्॥४९॥**
**घृतरक्तान्नमद्यानां गन्धाढ्या वसतश्च भूः।**
**मधुरा च कषाया च अम्ला तु कटुका क्रमात्॥५०॥**
**कुशैः सरैस्तथा काशैर्दूर्वाभिर्या च संश्रिता।**
**प्राच्यां विप्रांश्च निःशल्यां खातं पूर्वन्तु कल्पयेत्॥५१॥**
**चतुष्षष्ठिपदं कृत्वा मध्ये ब्रह्मा चतुष्पदः।**
**प्राक्तेषां वै गृहस्वामी कथितस्तु तथार्थतः॥५२॥**

इत्यादिसर्वं सुस्पष्टं पूर्वोक्तं च ॥४९-५२॥

तत्रैव—

**शिलेष्टकादिविन्यासं मन्त्रैः प्राच्यैः सुराश्चरेत्।**
**नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह॥५३॥**
**जये भार्गविदायादे प्रजानां जयमावह।**
**पूर्वाङ्गिरसि दायादे पूर्णकामं कुरुष्व माम्॥५४॥**
**भद्रे काश्यपिदायादे कुरु भद्रां मतिं मम।**
**सर्वबीजसमायुक्ते सर्वरत्नौषधैर्वृते॥५५॥**
**[1]रुचिरे! नन्दने! देवि! वासिष्ठे! रम्यतामिह।**
**प्रजापतिसुते! देवि! चतुरस्रे महीमये॥५६॥**
**सुभगे! सुव्रते! भद्रे! गृहे काश्यपि! रम्यताम्।**
**पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते॥५७॥**
**भवभूतिकरे देवि गृहे भार्गवि रम्यताम्।**
**अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते॥५८॥**

---

१. पूजिते परमाचार्य्यैर्गन्धमाल्यैरलङ्कृते (वेति पाठः)।

**इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम्।**
**देशस्वामि—पुरस्वामि—गृहस्वामि—परिग्रहे ।।५९।।**
**मनुष्य—धन—हस्त्यश्व—पशुवृद्धि—करी भव।**
**[1]गृहप्रवेशेऽपि तथा शिलान्यासं समाचरेत्।।६०।।**

सर्वं स्पष्टम् ।।५३-६०।।

तत्रैव वृक्षविषयेऽपि—

**उत्तरेण शुभः प्लक्षो वटः प्राच्यां गृहादितः।**
**उदुम्बरश्च याम्येन पश्चिमेऽश्वत्थ उत्तमः।।६१।।**

उपर्युक्त वृक्षों का शुभत्व तभी शुभ है, जब सभी वृक्ष एककालिक चारों दिशा में यथोक्त स्थानों में लगाये जाँय, अन्यथा एकाकी कोई भी शुभ नहीं है ।।६१।।

अथ भूमिपरिग्रहणम्—

**आकार—वर्णशब्दादि—गुणोपेतं भुवःस्थलम्।**
**सङ्गृह्य स्थपतिः प्राज्ञो दत्त्वा देवबलिं पुनः।।६२।।**
**स्वस्तिवाचकघोषेण जयशब्दादिमङ्गलैः।**
**अपक्रामन्तु भूतानि देवताश्च सराक्षसाः।।६३।।**
**वासान्तरं व्रजन्त्वस्मात्कुर्यां भूमिपरिग्रहम्।**
**इति मन्त्रं समुच्चार्य विहिते भूपरिग्रहे।।६४।।**
**कृष्ट्वा गोमयमिश्राणि सर्वबीजानि वापयेत्।**
**दृष्ट्वा तानि विरूढानि फलपक्वागतानि च।।६५।।**
**सवृषाश्च सवत्साश्च ततो गास्तत्र वासयेत्।**
**यतो गोभिः परिक्रान्तमुपघ्राणैश्च पूजितम्।।६६।।**
**संहृष्टवृषनादैश्च निर्घोषैर्शकुलीकृताम्।**
**वत्सवक्त्रच्युतैः फेनैः संस्कृतं प्रस्रवैरपि।।६७।।**
**स्नातं गोमूत्रसेकैश्च गोपुरीषैः सलेपनम्।**
**'च्युतरोमन्थनोद्‌गारैर्गोष्पदैः कृतकौतुकम्।।६८।।**

चतुर स्थपति या गृहस्वामी आकृति-वर्ण-शब्दप्रभृति प्रशस्त गुणों से परिपूर्ण भूमिभाग को ग्रहण कर भूतापसारणपूर्वक स्वस्तिवाचन मंगलमय पद्यों के पाठ के अनन्तर भूतबलि आठों दिशाओं में निवेदन कर निम्न मन्त्र

१. गृहप्रवेशे गृहारम्भेऽपि वास्तुपूजा विधेया।
गृहप्रवेशे तु वास्त्वर्चनं क्रियते शिलान्यासवदिति। (ग.पु.अ.२४७)

का (दोनों हाथ जोड़कर) पाठ करें। मन्त्र— "अपक्रामन्तु भूतानि देवयक्षाः सराक्षसाः। वासान्तरं व्रजन्त्वस्मात्कुर्यां भूमिपरिग्रहम्"।। अर्थात् इस भूमि पर निवास करने वाले भूत-प्रेत-पिशाच-राक्षस-देवता जो भी कोई प्राणी हों, अपना अन्यत्र निवास करें; मैं इस भूमि को अपने निवास के निर्माण के लिए ग्रहण करता हूँ। इसके बाद भूमि का परिग्रहण करना श्रेयस्कर होगा।

इसके अनन्तर भूमि को पवित्र करने के लिए हल से विधिपूर्वक भूमि को परिष्कृत (जोत) कर गोमयमिश्रित (गोमयरसप्लावित) यथोपलब्ध अनेक प्रकार के बीजों को उस भूमि में बो देना (वपन करना) चाहिए, वपन के बाद यथोक्त दिन की प्रतीक्षा कर निरीक्षण करे। यदि सभी बीज परिपुष्ट-वर्द्धनशील-मनोहर अंकुरित हो गये हों, तो वह भूमि सर्वथा ग्राह्य मनोरथपूर्ति की हेतु होगी।

उसके बाद परिपुष्ट युवा बैलों व सवत्सा गाय। को बीजाङ्कुरों को चरने के लिए निर्भ्रान्त वास कराना चाहिए, अर्थात् चरने के लिए छोड़ देना चाहिए। यदि वृष (अनड्वान्) हर्षित (प्रसन्न) होकर गाम्भीर्य ह्लादक शब्द घोष करते हों व माताओं के स्तनपान से बछड़ों के मुख से निःसृत फेन व दुग्धधारा तथा गोमयों का ढेर (समूह) मूत्रों से अनुलिप्त भूमि सब प्रकार से देव या मानव गृह निर्माण के लिए प्रशस्त हो जाती है ।।६२-६८।।

**विशेष–** बछड़ों के स्तनपान करते समय उनके मुख से निकले फेन व दुग्ध और उन गोसमूह के गोमय (गोबर), मूत्र से जितना ही अधिक से अधिक गीली नमी भू अत्यधिक पवित्र मानी गई है ।

अत्रैव मयमते हस्तमानं यथा–

**सर्वेषामपि वास्तूनां मानमेव विनिश्चयः ।**
**तस्मान्मानोपकरणं वक्ष्ये संक्षेपतः क्रमात् ।।६९।।**
**परमाणुक्रमाद्वृद्धं मानाङ्गुलमिति स्मृतम् ।**
**परमाणुरिति प्रोक्तं योगिनां दृष्टिगोचरम् ।।७०।।**

सभी वास्तुओं के मान (परिमाण) के बिना शुभाशुभ का निश्चय सम्भव नहीं है, अतः मान का प्रमाण अग्रिम पंक्तियों में दिया जा रहा है।

परमाणु के वृद्धि क्रम से अंगुल का प्रमाण प्रस्तुत शास्त्र में किया जायेगा, जो परमाणु दिव्यदृष्टि योगियों को अवगत होता है, उसी को आधार मानकर अंगुल की परिभाषा लिखी जा रही है ।।६९-७०।।

**परमाणुभिरष्टाभी रथरेणुरुदाहृतः ।**
**रथरेणुश्च बालाग्रं लिक्षा यूका यवास्तथा ।।७१।।**
**क्रमशोऽष्टगुणैः प्रोक्तो यवाष्टगुणितोऽङ्गुलम् ।**
**अङ्गुलन्तु भवेन्मात्रं वितस्तिर्द्वादशाङ्गुलम् ।।७२।।**
**तद् द्वयं हस्तमुद्दिष्टं तत् किंशुकेति मतं परैः ।**
**पञ्चविंशतिमात्रन्तु प्राजापत्यमिति स्मृतम् ।।७३।।**

आठ परमाणु का एक रथरेणु, आठ रथरेणु का एक त्रसरेणु, आठ त्रसरेणु का एक बालाग्र, आठ बालाग्र का एक लिक्षा, आठ लिक्षा का एक यूका, आठ यूका का एक यव, आठ यव का एक अंगुल, १२ अंगुल का एक वितस्ति, दो वितस्ति का एक हाथ होता है और दो हाथ का एक किंशुक होता है, जिसकी पर प्रजाय मात्रा कही जाती है । २५ मात्रा का एक प्राजापत्य होता है ।।७१-७३।।

**षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः ।**
**याने च शयने किष्कुः प्राजापत्यं विमानके ।।७४।।**
**वास्तूनां तु धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः ।**
**सर्वेषामपि वास्तूनां किष्कुरेवाऽथवा परः ।।७५।।**

२६ हाथ की धनुर्मुष्टि होती है। २७ हाथ का धनुर्ग्रह होता है। यानकी शिविका-रथ आदि के निर्माण में किष्कु (हाथ),विमान के निर्माण में प्राजापत्य का व्यवहार और वास्तु में धनुर्मुष्टि व ग्रामादि के निर्माण में धनुर्ग्रह तथा सभी वास्तु कार्यों में किष्कु या प्रजायवाचक किंशुक का प्रयोग होना चाहिए ।।७४-७५।।

अत्रैव विशेषः–

**रत्निश्चैवारत्निश्च भुजो बाहुः करः स्मृतः ।**
**हस्ताच्चतुर्धनुर्दण्डो यष्टिश्चैव प्रकीर्तितः ।।७६।।**

[1]रत्नि-अरत्नि-हाथ-भुज एवं कर प्रजायवाचक शब्द हैं। ४ हाथ का एक दण्ड होता है, उसे धनु व यष्टि भी कहते हैं ।।७६।।

**दण्डेनाष्टगुणा रज्जुर्दण्डे ग्रामं च पत्तनम् ।**
**नगरं निगमं खेटं वेश्मादीनपि मानयेत् ।।७७।।**

आठ दण्ड का एक रज्जु होता है, दण्ड के मापक से ग्राम-पत्तन-नगर-निगम-खेटक व समस्त वेश्मों का प्रमाण करना चाहिए । अर्थात् दण्ड माप को ही ग्रामादि भवन निर्माण में लिया जाता है ।।७७।।

---

१. पूर्व में इनका मान भिन्न बताया गया है ।

**गृहादीनां च हस्तेन याने च शयने बुधैः ।**
**वितस्तिना विधातव्यं क्षुद्राणामङ्गुलेन तु ।।७८।।**
**यवेनाल्पीयसां मानमेवं मानक्रमं बिदुः ।**
**मध्यमाङ्गुलिमध्यस्य पर्वमात्रायतन्तु यत् ।।७९।।**
**कर्तुर्मात्राङ्गुलं प्रोक्तं यागादीनां प्रशस्यते ।**
**देहलब्धाङ्गुलं यत्तदुपरिष्टाद्विधीपते ।।**
**एवं विदित्वा तु स्थपतिर्मानयेत्तद्दृढं भवेत् ।।८०।।**

गृह में गृहीत हस्तप्रमाण यान व शयन में भी ग्रहण करने के लिए वास्तुज्ञों का मत है कि शूद्र जातियों के लिए वितस्ति व अंगुलों का ग्रहण करना चाहिए । पूर्व में उद्धृत सच्छूद्रों के लिए यव से मान मानना चाहिए। जो मध्यमा अंगुलि के बीच के पर्व के बराबर मात्रा का विस्तार प्रमाण होता है, उसी पर्व के बराबर मात्रा का माप माना गया है। यज्ञकर्ता के पर्वतुल्य अंगुल से २४ अंगुल के हाथ का प्रयोग यज्ञादि पुण्य कर्मों में होना चाहिए। शरीर के अंगुल प्रमाण से उसके समस्त कार्य विहित हैं। इसी प्रकार हाथों के भेदों को समझकर उचित यथायोग्य प्रतिपादित हाथ से निर्माण की सीमा का निश्चय करना चाहिए ।।७८-८०।।

(मय के मत से शिल्पी की व्यवस्था, म.म.प्र.भा. ५ अ. पृ.२४ से)

शिल्पिलक्षणम्–

**भवन्ति शिल्पिनो लोके चतुर्धा स्वस्वकर्मभिः ।।८१।।**
**स्थपतिः सूत्रग्राही च वार्धकिस्तक्षकस्तथा ।**
**प्रसिद्धदेशसङ्कीर्णजातिजोऽभीष्टलक्षणः ।।८२।।**

प्रसिद्ध देश जाति व कर्म के अनुसार स्थपति, सूत्रग्राही, वार्धकि व तक्षक ये शिल्पी के चार भेद होते हैं ।।८२।।

एतेषां लक्षणं तत्रैव–

**स्थपतिः स्थापनार्हं स्यात् सर्वशास्त्रविशारदः ।**
**न हीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः ।।८३।।**
**अमात्सर्य्योऽनुसूयश्चातन्द्रितस्त्वभिजातवान् ।**
**गणितज्ञः पुराणज्ञः सत्यवादी जितेन्द्रियः ।।८४।।**
**चित्रज्ञः सर्वदेशज्ञश्चान्नदश्चाप्य[1]लुब्धकः ।**
**अरोगी चाऽप्रमादी च [2]सप्तव्यसनवर्जितः ।।**

१. शिल्पी चतुष्टयभेदश्चात्रदश्चापि । २. शब्द ।

**सुनामा दृढबुद्धिश्च वास्तुविद्याब्धिपारगः ।।८५।।**

वास्तु के स्थापन में कुशल, सर्वशास्त्रविशारद, हीन व अधिक अंग से रहित (व्यङ्गरहित) धर्मभीरु (धार्मिक) दयायुक्त-ईर्ष्या-अनसूयादोषमुक्त-आलस्यविहीन-स्वदेशीय-गणित-पुराणवेत्ता-सत्यवक्ता-जितेन्द्रिय-चित्रज्ञ-सर्वज्ञ-अन्नदाता-(उदार)अलुब्ध-रोगरहित-अतिप्रमादी न हो, अर्थात् ईर्ष्या-असूया-आलस्य-कृपण-लोभ-रोग व प्रमाद इन सात व्यसनों से मुक्त शेष गुणों से युक्त शुभनामा दृढ़निश्चयी वास्तुविद्यारूपी समुद्र का पारगामी होना चाहिए ॥८३-८५॥

**स्थपतेश्चैवास्य शिष्यो सूत्रग्राही सुतोऽथवा ।।८६।।**
**स्थपत्याज्ञानुसारी च सर्वकर्मविशारदः ।**
**सूत्रदण्डप्रपातज्ञो मानोन्मानप्रमाणवित् ।।८७।।**

सूत्रग्राही स्थपति का शिष्य या पुत्र हो व स्थपति की आज्ञा का पालक समस्त वास्तु सम्बन्धी कार्यों का जानने वाला सूत्रपात करने में भिज्ञ होना चाहिए । मान-उन्मान के प्रमाण का ज्ञाता (न्यूनाधिक ज्ञाता), शेष अग्रिम श्लोक से तक्षक के लक्षण का ज्ञान किया जाय ॥८६-८७॥

तक्षकस्य शेषलक्षणम्–

**शैलदार्विष्टकादीनां सूत्रग्राहिवशानुगः ।**
**तक्षणात्स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः ।।८८।।**

पूर्वोक्त लक्षणों के साथ ही सूत्रग्राही के सदृश लक्षणों के साथ पत्थर-लकड़ी-ईंट के आवश्यकतानुसार स्थूल व सूक्ष्म काटकर योग्य बनाने की कला में कुशल व सूत्रग्राही के आदेश का पालन करने वाले को तक्षक होना चाहिए ॥८८॥

**मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः ।**
**तक्षितानां तक्षकानामुपर्युपरि युक्तितः ।।८९।।**
**वृद्धिकृद्वार्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा ।**
**कर्मिणो निपुणाः शुद्धा बलवन्तो दयापराः ।।९०।।**
**गुरुभक्ताः सदा इष्टाः स्थपत्याज्ञानुगाः सदा ।**
**तेषामेव स्थपत्याख्यो विश्वकर्मेति संस्मृतः ।।९१।।**

भूमि के समस्त दोष-गुणों का ज्ञाता गुणी-शक्तिशाली वास्तुसम्बन्धी समस्त कर्मों में स्वतन्त्र (अन्य परामर्शमुक्त) तक्षित वास्तूपयोगी पदार्थों का यथायोग्य स्थानों में प्रयोगविद् सूत्रग्राही प्रभृति सभी कर्मियों के आदेश का

पालक वार्धकि को होना चाहिए व सर्वकार्य-कुशल (चतुर) छल-कपट-विहीन शुद्ध-दयायुक्त गुरुजनों का भक्त श्रेष्ठ स्थपतियों में विशेषज्ञ स्थपति को होना चाहिए, जिसे विश्वकर्मा भी कह सकते हैं ॥८९-९१॥

विशेष:–

**एभिर्विना हि सर्वेषां कर्म कर्तुं न शक्यते।**
**तस्मादेतत् सदा पूज्यं स्थपत्यादिचतुष्टयम्।।९२।।**

उपर्युक्त स्थपति प्रभृति, स्थपति-सूत्रग्राही-वार्धकि व तक्षक इन चारों के बिना वास्तु निर्माण सम्भव नहीं है, अतः ये चारों पूजनीय समादरणीय हैं ॥९२॥

यथा–

**एभिः स्थपत्यादिभिरत्र लोके विना ग्रहीतुं सुकृतं न शक्यम्।**
**तैरेव सार्धं गुरुणाऽथ तस्माद् भजन्ति मोक्षं भवतस्तु मर्त्याः।।९३।।**

पूर्वोक्त विधिविहित विधानसम्पन्न इन कर्मचारियों के बिना संसार में कोई सुकृत सम्भव नहीं है तथा इन सुकृत्यों व गुरु के प्रसाद से मनुष्य इस भवसागर से मोक्ष प्राप्त कर सकता है ॥९३॥

वास्तुपुरुषलक्षणं चतु:षष्टिवास्तुपदे देवतानिर्देशो मयमते–

(अ. ७ पृ. ४५)

**षड्वंशमेकहृदयं चतुर्मर्म चतुःशिरः।**
**मेदिन्यां वास्तुपुरुषं निकुब्जं प्राक्शिरो विदुः।।९४।।**
**तस्योत्तमाङ्गं विज्ञेयमार्यको नाम देवता।**
**सावित्रो दक्षिणभुजे सवित्रः कक्षमुच्यते।।९५।।**
**आपश्चैवापवत्सश्च सकक्षो वामतो भुजः।**
**विवस्वान् दक्षिणे पार्श्वे वामपार्श्वे महीधरः।।९६।।**
**मध्ये ब्रह्ममयः कायो मित्रः पुंस्त्वं विधीयते।**
**इन्द्रश्चैवेन्द्रराजश्च दक्षिणः पाद ईरितः।।९७।।**
**रुद्रो रुद्रजयो वामपादः शेते त्वधोमुखः।**
**वास्तुत्रिभागमध्ये तु वंशाः षट्प्रागुदङ्मुखाः।।९८।।**
**वास्तुमध्ये तु मर्माणि ब्रह्महृदयमुच्यते।**
**निष्कूटांशाः शिरा ज्ञेया इत्येष पुरुषः स्मृतः।।९९।।**
**गृहे गृहे मनुष्याणां शुभाशुभकरः स्मृतः।**
**तस्याङ्गानि गृहाङ्गैश्च विद्वान् नैवोपपीडयेत्।।१००।।**

**व्याधायस्तु यथासंख्यं भर्तुरङ्गे तु संश्रिताः।**
**तस्मात्परिहरेद्विद्वान् पुरुषाङ्गन्तु सर्वथा।।१०१।।**

मय के मत में ६४ पद वास्तु भूमि पर ६४ देवता (प्रत्येक पाद में) निवास करते हैं। इसमें ६ वंश १ हृदय ४ मर्म व ४ शिर की कल्पना की गयी है। इस प्रकार वास्तु-भूमि पर अधोमुख पूर्वशिर करके वास्तुपुरुष सोये हैं।

इनके अङ्गों का विभाग इस प्रकार है— शिर पर अर्यमा, सविता दक्षिण भुज, सावित्र दक्षिणकुक्षि, आप व आपवत्स वामभुज व वामकुक्षि में, विवस्वान् ब्रह्मा के दक्षिणपार्श्व में, वामपार्श्व में महीधर (पृथ्वीधर), मध्य के चार कोष्ठकों में ब्रह्मा, इसी प्रकार सभी अङ्गों की कल्पना की गयी है; किन्तु मित्र देवता पुंस्त्वांग में निवास करते हैं। इन्द्र व इन्द्रराज दक्षिणपाद, रुद्र व रुद्रजय वामपाद में निवास करते हैं। चतुष्पद वास्तु के मध्य में चार कोष्ठ ब्रह्मा का हृदय व मर्मस्थान कहे जाते हैं। (चारों दिशाओं में तीन-तीन भागों को छोड़कर) जो वंशों का स्थान है, उसे शिरा कहते हैं, ये वास्तुपुरुष के अङ्गों का विवरण है।

प्रत्येक घर में वास्तुपुरुष का जो अङ्ग भित्ति नागदन्त प्रभृति किसी भी वास्तु से पीड़ित होता है, तो स्वामी का भी वही अङ्ग पीड़ित होता रहता है। इसलिए विद्वान् स्थपति को निर्माण के समय मर्माङ्ग वेध से सावधान रहना चाहिए। अन्य भी ८१, १०० पद प्रभृति वास्तुपदों में भी विवेक से काम करना चाहिए ॥९४-१०१॥

अथ वास्तुपुरुषविन्यासे गुरुं प्रति हरिर्यथा गरुडपुराणे–

**वास्तुसंक्षेपतो मध्ये गृहादौ विघ्ननाशनम्।**
**ईशानकोणादारभ्य एकाशीतिपदे यजेत्।।१०२।।**
**ईशाने च शिरः पादौ नैऋत्येऽनिले करौ।**
**आवासवासवेश्मादौ पुरे ग्रामे वणिक्पथे।।१०३।।**

प्रत्येक आवास-निवासों के लिए चयनित सीमाबद्ध वास्तु-भूमि पर विघ्ननाश हेतु वास्तुपुरुष के निवास स्थान को कहता हूँ। यहाँ एकाशी पदवास्तु का विवरण कर अङ्गों का उल्लेख किया जा रहा है। ईशानकोण में वास्तुपुरुष का शिर, दोनों चरण नैऋत्य, अनिल वायव्य व अग्निकोण में भुज के स्थान हैं ॥१०२-१०३॥

प्रासादारामदुर्गेषु देवालयमठेषु च।
द्वात्रिंशस्तु सुरा बाह्ये तदन्तश्च त्रयोदश।।१०४।।
ईशानश्चैव पर्जन्यो जयन्तः कुलिशायुधः।
सूर्यः सत्यो भृगुश्चैव आकाशो वायुरेव च।।१०५।।
पूषा च वितथश्चैव गृहक्षतयमावुभौ।
गन्धर्वो भृङ्गराजस्तु मृगः पितृगणस्तथा।।१०६।।
दौवारिकस्तु सुग्रीवः पुष्पदन्तो गणाधिपः।
असुरः शेषपादौ च रोगोऽहिमुख्य एव च।।१०७।।
भल्लाटः सोमसर्पोऽपि अदितिश्च दितिस्तथा।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु।।१०८।।
ईशानादिचतुष्कोणसंस्थितान् पूजयेद् बुधः।
आपश्चैवाऽथ सावित्रो जयो रुद्रस्तथैव च।।१०९।।
मध्ये नवपदे ब्रह्म तस्याष्टौ च समीपगान्।
देवानेकोत्तरानेतान् पूर्वादौ नामतः शृणु।।११०।।
अर्यमा सविता चैव विवस्वान् विबुधाधिपः।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्।।१११।।
अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृतः।
ईशानकोणादारभ्य दुर्गे च क्रम उच्यते।।११२।।
आग्नेयकोणादारभ्य वंशो भवति दुर्द्धरः।
अदितिर्हिमवांश्चैव जयन्तश्चेदिदं त्रयम्।।११३।।
नायिका कलिका नाम शक्राद्गन्धर्वगाः पुनः।
वास्तुदेवान् पूजयित्वा गृहप्रासादकृद्भवेत्।।११४।।

उपर्युक्त वास्तुदेवों का यथोक्त वास्तु-पद्धति के अनुसार पूजन करने से गृह के निर्माण में कोई बाधा नहीं होती है तथा गृह में प्रसन्नता का कारण हो जाता है। चक्र से स्थानीय देवों का ज्ञान स्पष्ट होगा ॥१०४-११४॥

## चतुःषष्टिपदवास्तुचक्रम्

पूर्व

उत्तर / दक्षिण

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शिखी दितिः | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्तरिक्षः अनिलः |
| अदितिः | पर्जन्यः अदितिः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः पूषा | पूषा |
| भुजगः | भुजगः | आपवत्साः आयः | अर्यमा | अर्यमा | सविता सावित्रः | वितथः | वितथः |
| सोमः | सोमः | पृथ्वीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्क्षतः | बृहत्क्षतः |
| भल्लाटः | भल्लाटः | पृथ्वीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | यमः | यमः |
| मुख्यः | मुख्यः | रुद्रः राजयक्ष्मा | मित्रः | मित्रः | इन्द्रः जयन्तः | गन्धर्वः | गन्धर्वः |
| नागः | नागः शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | भृ रा. दौवारिकः | भृंगराजः |
| रोगः पापयक्ष्मा | शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | दौवारिकः | मृगः पितरः |

पश्चिम

गरुडप्रश्नोत्तरे गृहस्थापने हरिर्यथा–

**सुरेज्यः पुरतः कार्यो दिश्याग्नेय्यां महानसः।**
**कपिर्निगमने देयः पूर्वतः सूत्रमण्डलम्।।११५।।**
**गन्धपुष्पगृहं कार्यमैशान्यां पदसंयुतम्।**
**भाण्डागारञ्च कौवेर्यां गोष्ठागारञ्च वायवे।।११६।।**
**उद्वाश्रयं वारुण्यां वातायनसमन्वितम्।**
**समित्कुशेन्धन–स्थानमायुधानाञ्च नैर्ऋते।।११७।।**
**अभ्यागतालयं भव्यं (रम्यं) सशयनासनपादुकम्।**
**तोयाग्निदीपसद्भृत्यैर्युक्तं दक्षिणतो भवेत्।।११८।।**
**गृहान्तराणि सर्वाणि सजलैः कदलीगृहैः।**
**पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत्।।११९।।**
**प्राकारं तद्बहिर्दद्यात्पञ्चहस्तप्रमाणतः।**
**एवं विष्ण्वाश्रयं कुर्याद्वनैश्चोपवनैर्युतम्।।१२०।।**
**चतुःषष्टिपदो वास्तुप्रासादौ च प्रपूजितः।**
**मध्ये चतुष्पदो ब्रह्मा द्विपदास्त्वर्यमादयः।।१२१।।**
**कर्णे चैवाथ शिख्याद्यास्तथा देवाः प्रकीर्तिताः।**
**तेभ्यो ह्युभयतः सार्द्धादन्येऽथ द्विपदादयः।।**
**चतुःषष्टिपदा देवा इत्येव परिकीर्तिताः।।१२२।।**

गरुड़ जी के प्रश्नों के उत्तर में श्रीहरि की उक्ति— गृह के निर्माण में वास्तु सम्बन्धी देवों की (निर्माण के पूर्व) पूजा करने से समस्त विघ्न नष्ट हो जाते हैं। यह पूजा ईशानकोण से प्रारम्भ कर ८१ पद वाले वास्तुमण्डलस्थ देवों की भली-भाँति पूजा कर लेनी चाहिए।

वास्तुमण्डल के ईशान में वास्तुपुरुष के शिरः प्रभृति स्थानों में स्थित चक्रानुसार देवों की पूजा करके गृहारम्भ शुभकारक व निष्पन्न हो जाता है। ईशान से नैर्ऋत्यकोण तक, अग्नि से वायुकोण तक कर्ण-रेखा वंश के नाम से कही जाती है।

ईशानकोणीय वंश रेखा पर अदिति व ऊर्ध्वाधर वंश रेखाओं के योग में आपवत्स व नैर्ऋत्य बिन्दु पर जयन्त का पूजन किया जाय।

वास्तु भवन के सम्मुख ईशान में देवालय, अग्निकोण में पाकालय, पूर्व में यज्ञशाला, ईशानकोण में पत्थर या काष्ठ की पटरी से शिरोभाग में

सुगंधित द्रव्य व पुष्प का स्थान रहना उचित है। उत्तर में भण्डारगृह, वायव्य में गोशाला, पश्चिम में खिड़की व जलाशय, नैऋत्य् में समिधा (ईंधन) कुश शस्त्रास्त्रकक्ष, दक्षिण में सुन्दर शय्या-आसन-पादुका-जल-अग्नि-दीप-सज्जन भृत्यों से युक्त अतिथिगृह का निर्माण करना चाहिए । गृह के मध्य रिक्त भाग में कूप जलसिञ्चित कदली गृह (शीतगृह) पाँच प्रकार के पुष्पों का रोपण करें। भवन के बाह्यभाग में चारों तरफ पाँच हाथ ऊँची दीवाल (चारदीवारी) बनाकर बीच में (घर व चारदीवारी) वन, उपवनों से घिरा भगवान् विष्णु का मन्दिर बनावे। अन्य पद्यों का अर्थ चतुःषष्टि वास्तुमण्डल देवों के परिचय चक्र से स्पष्ट है ॥११५-१२२॥

वास्तुविषये मत्स्यपुराणे २५१ तः २५६ अ.पर्यन्तेषु सूक्ष्मांशं गृहीतम् । यथा–

वास्तुप्रणेतारः ऋषयः सूक्तौ मत्स्यपुराणे–

**भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा ।**
**नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ॥१२३॥**
**अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः ।**
**संक्षपेणोपदिष्टास्तु मनवे मत्स्यरूपिणा ॥१२४॥**

वास्तूत्पत्तौ तु तत्रैव–

**तदिदानीं प्रवक्ष्यामि वास्तुशास्त्रमनुत्तमम् ।**
**पुराऽन्धकवधे घोरे घोररूपास्य शूलिनः ॥१२५॥**
**ललाटस्वेदसलिलमपतद्भुवि भीषणम् ।**
**करालवदनं तस्माद्भूतमुद्भूतमुल्वणम् ॥१२६॥**
**ग्रसमानमिवाकाशं सप्तदीपवसुन्धराम् ।**
**ततोऽन्धकानां रुधिरमपिबत्पतितं क्षितौ ॥१२७॥**

वास्तुशास्त्र सम्बन्धी विषय-प्रतिपादन के कहने से पूर्व वास्तुपुरुष की उत्पत्ति का वर्णन परमावश्यक होने से प्रथम उनकी उत्पत्ति का विवरण प्रस्तुत करता हूँ। पूर्वकाल में अन्धकासुर के साथ भयंकर युद्ध में अन्धकासुर के वध करने में श्रम से उत्पन्न भगवान् शिव के ललाट के स्वेदरूप जल से उद्भूत भूमि पर गिरा हुआ भू से आकाश तक व्यापक शरीर वाला प्राणी अन्धकासुर के रुधिर का पान कर भी असन्तुष्ट अधोमुख वास्तुपुरुष के नाम से प्रसिद्ध हुआ ॥१२३-१२७॥

**तेन तत्समरे सर्वं पतितं यन्महीतले।**
**तथापि तृप्तिमगमन्नतद्भूतं यदा तदा।।१२८।।**

रुधिरपान कर गिरने पर भी जब वह तृप्त नहीं हुआ तो ॥१२८॥

**सदाशिवस्य पुरतस्तपश्चक्रे सुदारुणम्।**
**क्षुधाविष्टन्तु तद्भूतमाहर्तुं जगतीत्रयम्।।१२९।।**

अन्धकासुर का रुधिरपान कर भूमि पर गिर कर भी तृप्त न होकर सदाशिव के समक्ष ही घोर तप कर तीनों लोकों को ग्रास बनाने के लिए उद्यंत हो गया ॥१२९॥

**ततः कालेन सन्तुष्टो भैरवस्तस्य चाहवे।**
**वरं वृणुष्व भद्रन्ते यदभीष्टं तवानघे।।१३०।।**
**तमुवाच ततो भूतं त्रैलोक्यग्रसनक्षमम्।**
**भवामि देवदेवेश तथेत्युक्तञ्च शूलिना।।१३१।।**

उसकी तपस्या से भैरवरूपधारी भगवान् प्रसन्न होकर अभीष्ट वर माँगने के लिए कहे। तब उसके तीनों लोकों को अपना ग्रास बनाने के लिए वर माँगने पर भगवान् ने ऐसा ही हो, यह स्वीकार कर लिया ॥१३०-१३१॥

**ततस्तु त्रिदिवं सर्वं भूमण्डलमशेषतः।**
**स्वदेहेनान्तरिक्षञ्च रुन्धानं प्रपतद्भुवि।।१३२।।**
**अतो भीतैस्ततो देवैर्ब्रह्मणा चाथ शूलिना।**
**दानवासुरसंक्षोभिरवष्टब्ध्यं समन्ततः।।१३३।।**
**येन यत्रैव यत्क्रान्तं स तत्रैवावसत्पुनः।**
**निवासात् सर्वदेवानां वास्तुरित्यभिधीयते।।१३४।।**
**अवष्टब्ध्याश्च तेनापि विज्ञप्ताः सर्वदेवताः।**
**प्रसीदन्तु सुराः सर्वे युष्माभिर्निश्चलीकृताः।।१३५।।**

अभीष्ट वर पाकर आकाश व भूमण्डल एवं अन्तरिक्ष को अपने बृहत्शरीर से अवरुद्ध करते हुए भूमि पर गिर पड़ा। इस प्रकार भयङ्कर शरीर से त्रिभुवन के अवरोध से भयभीत ब्रह्मादि समस्त देव उसके शरीर को जिसको जहाँ स्थान मिला वे वहीं आक्रान्त कर लिये। देवों से आक्रान्त उसने कहा कि अच्छा हुआ कि आप लोग मुझे स्थिर (निश्चल) कर दिये। तथा देवों के आवास से उसका वास्तु नाम निश्चय कर दिया गया ॥१३२-१३५॥

**स्थास्याम्यहं किमाकारो ह्यवष्टब्धो ह्यधोमुखः।**
**ततो ब्रह्मादिभिः प्रोक्तं वास्तुमध्ये तु यो [१]बली।।१३६।।**
**आहारो वैश्वदेवान्ते नूनमस्मिन्भविष्यति।**
**वास्तुपूजामकुर्वाणस्तवाहारो भविष्यति।।१३७।।**

देवों से आक्रान्त होकर कहा कि मेरी स्थिति कैसी होगी और मेरा आहार क्या होगा ? इस पर विधाता ने कहा कि तुम अधोमुख इस भूमि पर निवास करो और वैश्वदेव बलि के बाद तुम्हारे लिए जो बलि दिया जाय, वही तथा वास्तुपूजा किये बिना गृह में निवास करने वाले प्राणियों के घर तुम्हारे आहार होंगे ॥१३६-१३७॥

तथा–

**अज्ञानात्तु कृतो यज्ञस्तवाहारो भविष्यति।**
**यज्ञोत्सवादौ च बलिस्तवाहारो भविष्यति।।१३८।।**
**एवमुक्तस्ततो हृष्टः स वास्तुरभवत्तदा।**
**वास्तुयज्ञः स्मृतस्तस्मात्ततःप्रभृति शान्तये।।१३९।।**

उपर्युक्त आहार के निर्देश के बाद भी अज्ञान से श्रद्धाविधिविहीन भी यज्ञ का भाग तुम्हें मिलेगा और यज्ञप्रभृति उत्सवों में भी तुम्हें बलि दी जायेगी, जो क्षेत्रपाल के नाम से जाना जायेगा। ऐसा कहने पर वह सन्तुष्ट होकर वास्तुपुरुष के नाम से जाना जाने लगा, उसी से वास्तु-शान्ति की व्यवस्था बना दी गई है। यही वास्तुपुरुष का स्वरूप व आहार की व्यवस्था विधाता के द्वारा की गयी है ॥१३८-१३९॥

॥ इति गरुडपुराणे वर्णिता वास्तुपुरुषव्यवस्था ॥

मासस‌म्बन्धे–

**पत्नीनाशोऽश्विने विद्यात्पौषे तस्करतो भयम्।**

इत्याद्यनेकवचनानि मत्स्यपुराणे प्राप्यन्ते ।

तत्रैवान्यद्वैशिष्ट्यं रौद्रमुहूर्तेषु यथा–

**श्वेते मैत्रेऽथ माहेन्द्रे गान्धर्वाभिजिदि रौहिणे।**
**तथा वैराजसावित्रे मुहूर्ते गृहमारभेत्।।१४०।।**

भूमिशुद्धिविषये–

**[२]क्लापकृष्टेऽथवा देशे सर्वबीजानि वापयेत्।**
**त्रिपञ्चसप्तरात्रान्ते यत्रारोहन्ति तान्यपि।।१४१।।**

१. बलिः । २. कुदाल इति भाषायाम् ।

श्रेष्ठोत्तमा कनिष्ठा भूर्वर्जनीयेतरा सदा।
पञ्चगव्यौषधिजलैः परीक्षित्वा च सिञ्चयेत्।।१४२।।
गृहारम्भेषु कण्डूतिः स्वाम्यङ्गे यत्र जायते।
शल्यं त्वपनयेत्तत्र प्रासादे भवने तथा।।१४३।।
सशल्यं भयदं यस्मादशल्यं शुभदायकम्।
हीनाधिकाङ्गता वास्तोः सर्वथा परिवर्जयेत्।।१४४।।
चतुःशालं त्रिशालञ्च द्विशालं चैकशालकम्।
नामतस्तान् प्रवक्ष्यामि स्वरूपेण द्विजोत्तमाः।।१४५।।

स्पष्टा एते श्लोकाः पूर्वोद्धृताश्च । २५३ अ.शालालक्षणफलञ्च म.पु.। तत्रैव राजप्रभृतिराजाङ्गभूतानां पुरुषाणां गृहमानं यथा–

इष्टिकादिभित्तिगृहेषु पिण्डावधिः–

गर्भमानेन मानन्तु सर्ववास्तषु शस्यते।
गृहव्यासस्य पञ्चाशदष्टादशभिरङ्गुलैः।।१४६।।
संयुतो द्वारविष्कुम्भो द्विगुणश्चोच्छ्रयो भवेत्।
द्वारशाखासु बाहुल्यमुच्छ्रायकरसम्मितौ।।१४७।।

।। इति मत्स्यपुराणे संक्षिप्तं गृहीतम्।।

अथ नारदीयपुराणे वास्तुविषये दिक्प्लवभूमिफलम्–

अत्यन्तवृद्धिदं नृणामीशानप्रागुदक्प्लवम्।
अन्यदिक्षु प्लवे तेषां शश्वदत्यन्तहानिदम्।।१४८।।

द्वारविषये तत्रैव–

अष्टावष्टौ प्रतिदिशं द्वाराणि स्युर्यथाक्रमम्।
प्रदक्षिणक्रमात् तेषाममूनि च फलानि वै।।१४९।।
हानिर्नैःश्व्यं धनप्राप्तिर्नृपपूजामहद्धनम्।
अतिचौर्यमतिक्रोधो भीतिर्दिशि शचीपतेः।।१५०।।
निधनं बन्धनं भीतिरर्थाप्तिर्धनवर्द्धनम्।
अनातकं व्याधिभयं निःसत्त्वं दक्षिणादिशि।।१५१।।
पुत्रहानिः शत्रुवृद्धिर्लक्ष्मीप्राप्तिर्धनागमः।
सौभाग्यमतिदौर्भाग्यं दुःखं शोकञ्च पश्चिमे।।१५२।।
कलत्रहानिर्निःसत्त्वं हानिर्धान्यधनागमः।
सम्पद्वृद्धिः शत्रुभीतिरामयं दिशि शीतगोः।।१५३।।

**एवं गृहादिषु द्वारं विस्ताराद् द्विगुणोच्छ्रितम्।**
**पश्चिमे दक्षिणे वापि कपाटं स्थापयेद् गृहे।।१५४।।**
**द्वात्रिंशद्द्वारप्राकाराः समीयांशाः समन्ततः।**
**पिशाचांशे गृहारम्भो दुःखशोकभयप्रदः।।१५५।।**

प्रत्येक दिशाओं में आठ-आठ भाग के अनुसार कुल ३२ द्वार होते हैं। उनमें देवांश में द्वार शुभ व पिशाचांश शोक, भयप्रद होता है। द्वार विस्तार की द्विगुणित ऊँचाई रखने का विधान है, प्रायः वामावर्त विभक्त विभागों की संख्या होती है, जिससे देवांश द्वार शुभ होता है। पश्चिम-दक्षिण की उक्ति मात्र उपलक्षण है ॥१४८-१५५॥

**शेषांशः स्याच्च निर्माणे पुत्रपौत्रधनप्रदः।**
**शिराः स्युर्वास्तुनो रेखा दिग्विदिग्मध्यसम्भवाः।।१५६।।**

दिशा व कोणों में (वास्तुचक्र में) जो रेखायें हैं, वे वास्तुपुरुष की शिरायें हैं, जो चक्र से स्पष्ट है ॥१५६॥

तत्रैव नारदीयपुराणे—

**सौम्य—फाल्गुन—वैशाख—माघ—श्रावण—कार्तिकाः।**
**मासाः स्युर्गृहनिर्माणे पुत्राऽऽरोग्यधनप्रदाः।।१५७।।**

सौम्यः मार्गशीर्षः शेषाः स्पष्टाः।

**अकारादिषु भागेषु दिक्षु प्रागादिषु क्रमात्।**
**खरोऽश्वोऽथ हरिः श्वाख्यः सर्पाखुगजशाशकाः।।**
**दिग्वर्णानामियं योनिः स्ववर्गात्पञ्चमो रिपुः।।१५८।।**

पिशाच उरगादि १५३ श्लोकोक्त भागों के शेष देवांशों में द्वार निर्माण शुभकारक पुत्र-पौत्र व धनप्रद है।

अकारादि अ क च ट त प य श ये आठ वर्ग पूर्वादि आठों दिशाओं के क्रम से स्वामी होते हैं। इनकी योनि क्रम से अश्व-खर-सिंह-श्वान-सर्प-मूषक-गज व शश होते हैं। इनमें अपने से पाँचवाँ शत्रु होता है ॥१५७-१५८॥

वास्तुसंस्थापने—

**मृत्पेटिकां स्वर्णरेणुधान्यशैवालसंयुताम्।**
**[1]गृहमध्ये हस्तमात्रे न्यासाय विन्यसेद्गृही।।१५९।।**

मिट्टी की पेटी में सुवर्ण-सप्तमृत्तिका-सप्तधान्य-सेवार सहित वास्तु-पुरुष को रखकर मध्य शब्द से गृह के अभीष्ट आकाश पद में १ हाथ धन हस्त खाते में यथापद्धति निवेश किया जाना चाहिए ॥१५९॥

---

१. मध्य=आकाशपदवाच्य है। खर=गरुड़, अश्व=मार्जार शब्द उपर्युक्त व पूर्वानुकूल है।

तत्रैव व्यवहाराय निवासगृहम्–

**स्नानागारं दिशि प्राच्यामाग्नेय्यां पाकमन्दिरम्।**
**याम्यां च शयनागारं नैर्ऋत्यां शस्त्रमन्दिरम्।।१६०।।**
**प्रतीच्यां भोजनगृहं वायव्यां धान्यमन्दिरम्।**
**कौवेर्यां देवतागारमीशाने क्षीरमन्दिरम्।।१६१।।**

अर्थ स्पष्ट है; परन्तु उत्तर देवतागृह व ईशान दुग्धगृह, यह अन्यत्र से भिन्न है ।।१६०-१६१।।

तत्रैवान्यच्च–

**शय्या–मूत्रास्त्रविद्या च सभोजनाङ्गनाश्रयम्।**
**धान्यस्त्रीभोगवित्तञ्च शृङ्गारायतनानि च।।**
**दक्षिणादिक्रमतस्तेषां गृहनिर्माणकं शुभम्।।१६२।।**

दक्षिणदिशा क्रम से गृहस्थापन-वासगृह यथा दक्षिण क्रम से शय्या-मूत्राशय-शस्त्र-विद्या-भोजन-रोदन-धान्य-रति-धनसंग्रह व शृङ्गार या देवगृह सर्ववास्तुसंग्रह स्नान व पाकगृह होना चाहिए ।।१६२।।

**विशेष–** यहाँ पूर्वानुरोध से भावार्थ किया गया है । अत: पूर्वप्रकरणोक्त विवरण देखें ।

गृहस्रावस्तत्रैव–

**गृहादीनां गृहश्रावं क्रमशोऽष्टविधं स्मृतम्।**
**पाञ्चालमानं वैदेहं कौरवञ्च कुजन्यकम्।।१६३।।**
**मागधं शूरसेनं च गान्धारमावन्तिकं स्मृतम्।**
**सचतुर्भागविस्तारमुत्सेधं यत्तदुच्यते।।१६४।।**
**पञ्चालं सपञ्चमांशं चोत्तरोत्तरवृद्धितः।**
**वैदेहादीतरेषां च मानानि च यथाक्रमम्।।१६५।।**

प्रसङ्गवश पाञ्चालादि की व्यवस्था यहाँ नारदपुराण के अनुसार उद्धृत है, शेष पूर्व में उद्धृत है।

**विशेष–** पूर्वोक्त श्लोकों में उक्त स्रावप्रसंग के अनुसार अर्थ किया गया है। यहाँ उपर्युक्त पद्यों की समीक्षा से उत्पन्न अर्थ से स्राव जलबहाव स्पष्ट होता है।

प्रत्येक निवास-गृह में स्राव होना चाहिए, जो आठ प्रकार का होता है। उसका क्रम पाञ्चाल-वैदेह-कौरव-कुजन्य-मगध-शूरसेन-गान्धार व आवन्तिक है। यह विस्तार के चतुर्थांश से युक्त विस्तारतुल्य (स्वचतुर्थांशयुक्त) सम ऊँचाई गृहोच्छ्रिति होनी चाहिए (जो उच्छ्रिति के ऊपर स्राव पाञ्चाल प्रभृति नाम से प्रसिद्ध है)। पाञ्चालमान के पञ्चमांशतुल्य वृद्धिक्रम से वैदेहादिकों की उच्छ्रिति होती है ॥१६३-१६५॥

उपर्युक्तमानं वर्णपरत्वेन तत्रैव–

**पाञ्चालमानं सर्वेषां साधारणमतः परम्।**
**आवन्तिमानं विप्राणां गान्धारं क्षत्रियस्य च॥१६६॥**
**कौजन्यमानं वैश्यानां विप्रादीनां यथोत्तरम्।**
**यथोदितं [1]जलस्रावं द्वित्रिभूमिकवेश्मनाम्॥१६७॥**

पाञ्चालमान सभी वर्णों के लिए सामान्य रूप से ग्राह्य है। आवन्तिक-विप्रों, गान्धार क्षत्रियों, कौजन्य वैश्यों के लिए होता है। यह विप्रादि वर्णों के क्रम से यथोत्तर माना गया है। उपर्युक्त जलस्राव अर्थात् ऊपर के छत की उच्छ्रिति का जलस्राव होना चाहिए, जिस पर वर्षा के जल का बहाव होता है। यह विधि दो-तीन प्रभृति भौमों के लिए प्रतिपादित है ॥१६६-१६७॥

वास्तुपूजनान्ते वास्तुपुरुषप्रार्थना–

**वास्तुपुरुष! नमस्तेऽस्तु भूशय्यानिरत प्रभो।**
**मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा॥१६८॥**
**इति प्रार्थ्य यथाशक्त्या दक्षिणामर्चकाय च।**
**दद्यात्तदग्रे विप्रेभ्यो भोजनं च स्वशक्तितः॥१६९॥**
**अनेन विधिना सम्यग्वास्तुपूजां करोति यः।**
**आरोग्यं पुत्रलाभञ्च धनं धान्यं लभेन्नरः॥१७०॥**
**अकृत्वा वास्तुपूजां च यः प्रविशेन्नवमन्दिरम्।**
**रोगान्नानाविधान्क्लेशानश्नुते सर्वसङ्कटम्॥१७१॥**
**अकपाटमनाच्छन्नमदत्तं बलिभोजनम्।**
**गृहं न प्रविशेदेवं विपदामाकरं हि तत्॥१७२॥**

वास्तुपूजा की विधि पूर्वोक्त है, अतः उसका यहाँ उद्धरण नहीं दिया गया है,शेष स्पष्ट है,प्रमाण के रूप में वचनान्तर उपस्थित है॥१६८-१७२॥

---

१. ऊपरी छत के वर्षा के जलस्तर से सम्बद्ध।

*राजप्रभृतिराजाज्ञानां गृहभेदप्रमाणानि मत्स्यपुराणे*– २५२ अ.। तावत्पूर्वं चतुशालादिलक्षणं तत्रैव–

**चतुःशालं प्रवक्ष्यामि स्वरूपं नामतस्तथा।**
**चतुःशाल-चतुर्द्वारैरलिन्दैः सर्वतोमुखम्।।१७३।।**

नाम स्वरूप भेद से शाला कहते हैं। इनके भेद चतुर्द्वार और अलिन्दों से भिन्न-भिन्न अनेक प्रकार के होते हैं ।।१७३।।

**नाम्ना तत् सर्वतोभद्रं शुभं देवनृपालये।**
**पश्चिमद्वारहीनन्तु नन्द्यावर्तः प्रचक्षते।।१७४।।**

पूर्वश्लोक के अनुसार जिस शाला में चारों दिशाओं में चार द्वार और अलिन्द हों तो उसे सर्वतोभद्र प्रासाद कहते हैं। यह राजा व देवों के लिये शुभ है और पश्चिम से भिन्न अन्य दिशा में द्वार अलिन्द हो, तो उसे नन्द्यावर्त प्रासाद कहते हैं ।।१७४।।

**दक्षिणद्वारहीनन्तु वर्द्धमानमुपाहृतम्।**
**पूर्वद्वारविहीनन्तत् स्वस्तिकं नाम विश्रुतम्।।१७५।।**
**रुचकं चोत्तरे हीनं द्वारन्तु तत्प्रचक्षते।**
**सौम्यशालाविहीनं यत् त्रिशालं धान्यकञ्च यत्।।१७६।।**

दक्षिणद्वारहीन चतुःशाल वर्द्धमान नाम से प्रसिद्ध है। वही पूर्वद्वार से हीन शेष ३ दिशाओं के द्वार और अलिन्द से स्वस्तिक प्रासाद होता है। उत्तरद्वारहीन चतुःशाल को रुचक कहते हैं। यह चतुःशाल के भेद हैं। उत्तरशालाविहीन अन्य दिशाओं में तीन शाला वाले भवन को धान्यक कहते हैं ।।१७५-१७६।।

**क्षेमवृद्धिकरं नृणां बहुपुत्रफलप्रदम्।**
**शालया पूर्वया हीनं सुक्षेत्रमिति विश्रुतम्।।१७७।।**

पूर्वश्लोकोक्त त्रिशाल शान्ति का प्रवर्द्धक बहुपुत्र फल का दाता है। पूर्वशालाविहीन शेष तीन दिशा की शाला वाला भवन सुक्षेत्र कहलाता है। इसमें धन-धान्य, यश व आयुष्य की वृद्धि होती है व शोक मोह का नाश होता है। उत्तर श्लोक से स्पष्ट है ।।१७७।।

**धनं यशस्यमायुष्यं शोकमोहविनाशनम्।**
**शालया याम्यया हीनं यत् त्रिशालन्तु सालयम्।।१७८।।**

याम्यशालारहित त्रिशाल कुल का नाशक व सर्वव्याधि का जनक होता है, उत्तरार्ध का भाव है ।।१७८।।

**कुलक्षयकरं नृणां सर्वव्याधिकरं तदा।**
**हीनं पश्चिमया यत्तु पक्षघ्नं नाम तत्पुनः।।१७९।।**
**मित्रबन्धून्सुतान् हत्वा तथा सर्वभयावहम्।**
**याम्यापराभ्यां शालाभ्यां तथा सर्वभयापहम्।।१८०।।**
**क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम्।**
**यमसूर्यं च विज्ञेयं पश्चिमोत्तरशालकम्।।१८१।।**
**राजाग्निभयदं नृणां कुलक्षयकरञ्च यत्।**
**उदक्पूर्वे तु शाले द्वे दण्डाख्ये यत्र तद्भवेत्।।१८२।।**
**अकालमृत्युभयदं परचक्रभयावहम्।**
**धान्याख्यं पूर्वयाम्याभ्यां शालाभ्यां वह्निशालकम्।।१८३।।**
**तच्छस्त्रभयदं नृणां पराभवभयावहम्।**
**चुल्लीपूर्वापराभ्यान्तु सा भवेन्मृत्युसूचिनी।।१८४।।**
**वैधव्यदायकं स्त्रीणामनेकभयकारकम्।**
**कार्यमुत्तरयाम्याभ्यां भयदं जायते नृणाम्।।१८५।।**

पश्चिमशालाविहीन त्रिशाल पक्षघ्न नाम से प्रसिद्ध है। यह मित्र-बन्धु-सुत का नाशक व भयदायक है। दक्षिण व पश्चिम दो शाल गृह धन-धान्य का प्रवर्द्धक है और क्षेम-परिवर्द्धक व पुत्रकारक है।

पश्चिम-उत्तर के दो शाला भवन को यम-सूर्य कहते हैं। इसमें राज व अग्नि का भय व कुल का नाश होता है। उत्तर-पूर्व की दो शाला दण्ड नाम की अकालमृत्युकारक व पराजय की जननी है। पूर्व-दक्षिण की दो शाला धन नामवाली शस्त्रभय व पराजयकारिणी है। पूर्वापर दो शाला चुल्ली नाम की मृत्यु-वैधव्य व अनेक भयोत्पादक है। उत्तर व दक्षिण की दो शाला भयदायक है ॥१७९-१८५॥

अथ राजप्रभृतिराजाङ्गगृहप्रमाणं तत्रैव—

**अथातः सम्प्रवक्ष्यामि भवनं पृथिवीपतेः।**
**पञ्चप्रकारं तत्प्रोक्तमुत्तमादिविभेदतः।।१८६।।**

यहाँ राजा व उनके अंगों के उत्तम-मध्यम व अधम भेद से पाँच प्रकार के भवनों की व्यवस्था दी जा रही है ॥१८६॥

तत्पूर्वं राजगृहमिति–

अष्टोत्तरहस्तशतं विस्तरं चोत्तमोत्तमम्।
चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः।।१८७।।
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते।
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम्।।१८८।।
षड्भिः षड्भिरशीतिर्हीयते तत्र विस्तरात्।
त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते।।१८९।।
सेनापतेः प्रवक्ष्यामि तथा भवनपञ्चकम्।
चतुष्षष्टिस्तु विस्तारात्षड्भिः षड्भिस्तु हीयते।।१९०।।
पञ्चस्वेतेषु दैर्घ्यं स्यात् षड्भागेनाधिकं भवेत्।
मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम्।।१९१।।
चतुश्चतुर्भिर्हीना स्यात् करषष्टिः प्रविस्तरे।
अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते।।१९२।।
सामात्यामात्यलोकानां वक्ष्ये भवनपञ्चकम्।
चत्वारिंशत्तथाष्टौ च चतुर्भिर्हीयते क्रमात्।।१९३।।
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते।
शिल्पिनां कञ्चुकीनाञ्च वेश्यानां गृहपञ्चकम्।।१९४।।
अष्टाविंशत्कराणान्तु विहीनं विस्तरे क्रमात्।
द्विगुणं दैर्घ्यमेवोक्तं मध्यमेष्वेवमेव तत्।।१९५।।
दूतीकर्मान्तिकादीनां वक्ष्ये भवनपञ्चकम्।
चतुर्थांशाधिकं दैर्घ्यं विस्तारो द्वादशैव तु।।१९६।।
अर्धार्धकरहानिः स्याद्विस्तारात्पञ्चशः क्रमात्।
दैवज्ञ–गुरु–वैद्यानां समाश्चास्तु पुरोधसाम्।।१९७।।
तेषामपि प्रवक्ष्यामि तथा भवनपञ्चकम्।
चत्वारिंशत्तु विस्ताराच्चतुर्भिर्हीयते क्रमात्।।१९८।।
पञ्चस्वेतेषु दैर्घ्यं स्यात्षड्भागेनाधिकं भवेत्।
चतुर्वर्णस्य वक्ष्यामि सामान्यं गृहपञ्चकम्।।१९९।।
द्वात्रिंशत्कराणान्तु चतुर्भिर्हीयते क्रमात्।
आषोडशादिति परं नूनमन्तेऽवसायिनाम्।।२००।।
दशांशेनाष्टभागेन त्रिभागेनाथवादिकम्।
अधिकं दीर्घमित्याहुर्ब्राह्मणादेः प्रशस्यते।।२०१।।

सेनापतेर्नृपस्यापि गृहयोरन्तरेण तु।
कोशवासगृहं कार्यं भाण्डागारं तथैव च।।२०२।।
सेनापतेर्गृहस्यापि चातुर्वर्णस्य चान्तरे।
वासाय च गृहं कार्यं पूज्येषु च सर्वदा।।२०३।।
अन्तरप्रभवानाञ्च स्वपितुर्गृहमिष्यते।
तथा हस्तशतादूर्ध्वं गदितं वनवासिनाम्।।२०४।।
[1]सेनापतेर्गृहस्यापि सप्तत्या सहितेऽन्विते।
चतुर्दशहृते व्यासे शालान्यासं प्रकीर्तितम्।।२०५।।
पञ्चत्रिंशद्धृते तस्मिन्नलिन्दः समुदाहृतः।
तथा षट्त्रिंशता हस्ता सप्ताङ्गुलसमन्विता।।२०६।।
विप्रस्य महती शाला न दैर्घ्यं परतो भवेत्।
दशाङ्गुलाधिका तद्वत्क्षत्रियस्य न विद्यते।।२०७।।
पञ्चविंशत्करा वैश्येऽङ्गुलादि त्रयोदश।
तावत्करैव शूद्रस्य युता पञ्चदशाङ्गुलैः।।२०८।।
शालायास्तु त्रिभागेन यस्याग्रे वीथिका भवेत्।
सोष्णीषं नाम तद्वास्तु पश्चाच्छ्रेयोच्छ्रयं भवेत्।।२०९।।
पार्श्वयोर्वीथिका यत्र सावष्टभ्यन्तदुच्यते।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते।।२१०।।
शुभदं सर्वमेतत् स्याच्चतुर्वर्णचतुर्विधम्।
विस्तरात् षोडशो भागस्तथा हस्तचतुष्टयम्।।२११।।
प्रथमो भूमिकोच्छ्राय उपरिष्टात् प्रहीयते।
द्वादशांशेन सर्वासु भूमिकासु तथोच्छ्रयः।।२१२।।
पक्वेष्टका भवेद्भित्तिः षोडशांशेन विस्तरात्।
दारवैरपि कल्प्यं स्यात् तथा मृण्मयभित्तिका।।२१३।।
गर्भमानेन मानन्तु सर्ववास्तुषु शस्यते।
गृहव्यासस्य [2]पञ्चाशदष्टादशभिरङ्गुलैः।।२१४।।

---

१. सेनापतिव्यास + ७० ÷ ३५ = अलिन्दप्रमाणं भवति।

$\frac{\text{सेनापतिव्यास + ७०}}{\text{१४}}$ = शालाप्रमाणं भवति।

२. पञ्चमांशोऽष्टादशांगुलसमेत इति मत्स्यपुराणे।

**संयुतो द्वारविष्कम्भो द्विगुणश्चोच्छ्रयो भवेत्।**
**द्वारशाखासु बाहुल्यमुच्छ्रायकरसम्मितैः ।।२१५।।**
**अङ्गुलैः सर्ववास्तूनां पृथुत्वं शस्यते बुधैः ।**
**उदुम्बरोक्तभागञ्च तदर्धार्धं प्रविस्तरात् ।।२१६।।**

यद्यपि सोपान २४ में राजप्रभृति राजानुचरों के भवनों का प्रमाण भाषापूर्वक चित्रांकित किया गया है तथा उसके मूल वचनों को नारदीय पुराण के १७३ श्लोक से २१६ श्लोक तक वर्तमान सोपान में भी प्रमाण के रूप में प्रदर्शित किया गया है । अत: ये श्लोक स्पष्टार्थ एवं पुनरुक्तिदोषरहित हैं ।।१८७-२१६।।

अथात्र पूर्वप्रतिपादितनाक्षत्रपिण्डानयनस्योदाहरणं प्रदर्श्यते–

सर्वप्रथम मानव के नामनक्षत्र से पिण्ड निर्माण में प्रयुक्त नक्षत्रों के साथ जिस नक्षत्र से विवाहवत् शुभ उत्तम गणना बने, उसी नक्षत्र को इष्ट मानकर पिण्ड-साधन करना चाहिए; परन्तु इस गणना में नाडी एक होनी चाहिए।

यदि गणना के अनुसार इष्ट नक्षत्र पुष्य है, तो पुष्य की अश्विनी से संख्या = ८ है।

पूर्वोक्त प्रथा के अनुसार गणित प्रारम्भ = यथा इष्टर्क्ष संख्या = ८

८-१ = एकोनेष्टर्क्ष-संख्या = ७ इसे १५२ × ७ गुणने पर= १०६४= गुणनफल हुआ । (१)

आठ आयों में प्रथम ध्वज आय स्वीकार किया, जिसकी संख्या = १ में १ हीनकर ८१ से गुणने पर गुणनफल = ८१ × ० = ० = आयजनित गुणनफल = ० = (२)

गुणनफलयोग = (१) + (२) = १०६४ + ० = इसमें १७ के योग से = १०६४ + १७ = क्षेत्रफल बृहत्पिण्ड हुआ । इसको २१६ से भाग दिया तो = १०८१ तो शेष =

१०८१ ÷ २१६ = [1]लब्धि ५ व शेष = १ यह लघुपिण्ड हुआ ।

इसे नव स्थानों में रखकर गुणक से गुणा व भाजक से भाग देने पर शेष आयादि नव फल होंगे ।

---

१. १ लब्धि उपेक्ष्य है।

